


# ॥ हृदयप्रियः ॥

## ॥ प्रथमखण्डः ॥



### आयुष्कामीयकल्पः ।

श्रीमद्वाग्भटयार्थीशं भिषक्तममुपास्महे ।
रोगान् ज्वरादीन् रागादीन् जित्वा दिशति यस्सुखम् ॥ १ ॥

सदा धृता तेन हिमाद्रिजाता
महौषधिस्सर्वहितप्रभावा ।
बाह्यान्तरानाशु गदानपोह्य
शिवा प्रदद्यादनिशं शिवं वः ॥ २ ॥

आयुश्शास्त्रसुबोधाय बालानां मां कृतोद्यमम् ।
अनुगृह्णन्तु गुरवो धन्वन्तर्यादिदेवताः ॥ ३ ॥

॥ अथात आयुष्कामीयकल्पं व्याख्यास्यामः ॥

ब्रह्मा स्मृत्वायुषो वेदं प्रजापतिमजिग्रहत् ।
सोऽश्विनौ तौ सहस्राक्षं सोऽत्रिपुत्रादिकान् मुनीन् ॥ ४ ॥
तेऽग्निवेशादिकान् विप्रांस्तदुक्तीः संक्षिपन् सुधीः ।
वाग्भटोष्टांगहृदयं षडंगं विधिनाकरोत् ॥ ५ ॥
प्रायेणाऽष्टांगहृदयप्रोक्तैः पद्यैर्नवैरपि ।
तदर्थानुसृतैः कुर्वे बालानां हृदयप्रियम् ॥ ६ ॥

आयुष्कामयमानेन धर्मार्थसुखसाधनम् ।
आयुर्वेदोपदेशेषु विधेयः परमादरः ॥ ७ ॥
तत्र रोगान् परिज्ञाय चिकित्सा हि विधीयते ।
लक्ष्यानवेक्षणे शस्त्रं सुधारमपि निष्फलम् ॥ ८ ॥
रोगस्तु दोषवैषम्यं दोषसाम्यमरोगता ।
वायुः पित्तं कफश्चेति त्रयो दोषास्समासतः ॥ ९ ॥
ते व्यापिनोऽपि हृन्नाभ्योरधोमध्योर्ध्वसंश्रयाः ।
वयोऽहोरात्रिभुक्तानां तेऽन्तमध्यादिगाः क्रमात् ॥ १० ॥
तैर्भवेद्विषमस्तीक्ष्णो मन्दश्चाग्निस्समैस्समः ।
कोष्ठः क्रूरो मृदुर्मध्यो मध्यः स्यात्तैस्समैरपि ॥ ११ ॥
तत्र रूक्षो लघुश्शीतः खरस्सूक्ष्मश्चलोऽनिलः ।
पित्तं सस्नेहतीक्ष्णोष्णं लघु विस्रं सरं द्रवम् ॥ १२ ॥
स्निग्धश्शीतो गुरुर्मन्दः श्लक्ष्णो मृत्स्नः स्थिरः कफः ।
संसर्गस्सन्निपातश्च तद्द्वित्रिक्षयकोपतः ॥ १३ ॥
वृद्धिस्समानैस्सर्वेषां विपरीतैर्विपर्ययः ।
तद्वैषम्यं पापकर्मप्रेरितैः कालयोजितैः ॥ १४ ॥
अहिताचरणैरेव देहिनामिह जायते ।
शुभकर्मयुतैरेषां साम्यं युक्तैश्चिकित्सितैः ॥ १५ ॥
सुखञ्च नित्यं भवतीत्यतो वच्मीह तान्यपि ।
हिंसास्तेयान्यथाकामपैशुन्यपरुषानृतम् ॥ १६ ॥
संभिन्नालापं व्यापादमभिध्यां दृग्विपर्ययम् ।
पापं कर्मेति दशधा कायवाङ्मानसैस्त्यजेत् ॥ १७ ॥
आचरेद्देवगोविप्रगुरुवृद्धार्तपूजनम् ।
ब्रह्मचर्यं शमं शौचं सत्यं सर्वप्रियं वचः ॥ १८ ॥

पाठं सन्तोषमास्तिक्यश्चार्जवं चेतसो दमम् ।
सुवेषदर्शीऽभूषः स्यात् खलैर्मुक्तस्सदाश्रयः ॥ १९ ॥

तथा तमनुवर्तेत यो यथा परितुष्यति ।
न कुर्याद्वृत्तिहीनोऽपि कर्म क्वापि जुगुप्सितम् ॥ २० ॥

परनिन्दां स्वप्रशंसां याचनं वैरमुत्तमैः ।
दयार्द्रचित्तो दाता च निश्चलस्सम्पदापदोः ॥ २१ ॥

परोपकारी च भवेत् धर्मोऽयं सम्मतस्सताम् ।
ब्राह्मे मुहूर्ते उत्तिष्ठेदायुःश्रीसुखवृद्धये ॥ २२ ॥

कृतशौचः स्मरेन्नित्यमिहामुत्र च यच्छुभम् ।
कायवाङ्मनसां चेष्टां प्राक् श्रमाद्विनिवर्तयेत ॥ २३ ॥

ऋजुरेव भवेत् काले सर्ववेगप्रवर्तने ।
न वेगितोऽन्यकारी स्यान्नाजित्वा साध्यमामयम् ॥ २४ ॥

त्वग्दृष्टिनिद्रासुखदं वातश्रमजराहरम् ।
अभ्यंगमकफग्रस्तो जीर्णे सेवेत सात्म्यतः ॥ २५ ॥

अर्धशक्त्या बली स्निग्धो मेदःकफहरं भजेत् ।
व्यायामं लाघवार्थश्च युवा शीते न पित्तवान् ॥ २६ ॥

स्नानशीलो भवेद्रत्नसिद्धमन्त्रौषधान्वितः ।
स्वधर्ममाचरेत् भक्त्या दैवेच्छामनुवर्तयन् ॥ २७ ॥

न निकृष्टं भवेत् किञ्चित् कर्म हि स्वकुलोचितम् ।
हेमन्ते शिशिरे चर्चा स्याद्वम्ललवणान् भजेत् ॥ २८ ॥

व्यायामादि च वातघ्नं वसन्ते तु कफापहम् ।
लघु रूक्षं भजेदन्नं ग्रीष्मे त्वन्नं हिमं लघु ॥ २९ ॥

भजेच्छीतप्रदेशस्थस्सर्वशीतोपचारवान् ।
वर्षास्वपि त्रिदोषघ्नं दीपनं सलिलं शृतम् ॥ ३० ॥

सेवेत सर्पिश्शरदि पित्तघ्नं लघु तिक्तकम् ।
शुचि हंसोदकं पेयमृतुष्वेवं विधिर्हितः ॥ ३१ ॥

चयप्रकोपप्रशमा वायोर्ग्रीष्मादिषु त्रिषु ।
वर्षादिषु च पित्तस्य श्लेष्मणश्शिशिरादिषु ॥ ३२ ॥

जयेद् वृष्टौ चयं वायोः पित्तस्य तु शरद्यपि ।
वसन्ते श्लेष्मणश्चैवमृतुजाश्च भजेद्रुजम् ॥ ३३ ॥

दोषाः कदाचित् कुप्यन्ति जिता लंघनपाचनैः ।
ये तु संशोधनैश्शुद्धा न तेषां पुनरुद्भवः ॥ ३४ ॥

न पीडयेदिन्द्रियाणि न चैतान्यतिलालयेत् ।
समीक्ष्य सकलं कुर्यादनुगच्छेन्महद्गतिम् ॥ ३५ ॥

एवमाचारलेशोऽयमायुःकीर्तिसुखप्रदः ।
धीमानन्यांश्च गृह्णीयात् लोकादुभयलोकदान् ॥ ३६ ॥

अध्यायाश्चाथ कथ्यन्ते वक्ष्यमाणाः क्रमादिह ।
आयुष्कामीयकल्पः प्राक् शाल्यादेरौषधस्य च ॥ ३७ ॥

आहारस्य रसादेश्च गर्भरक्षाविधेः परम् ।
बालरुक्प्रतिषेधादेरङ्गमर्मादिकस्य च ॥ ३८ ॥

स्नेहस्वेदकयोश्छर्दिरेकयोर्वस्तिकर्मणः ।
नस्यादे रक्तमोक्षस्य ततः क्षाराग्निकर्मणः ॥ ३९ ॥

यन्त्रशस्त्रादिकस्याथ मानभेदस्य षोडशः ।
द्वितीयखण्डे दूतादिलक्षणं प्राक् चिकित्सितम् ॥ ४० ॥

सनिदानं ज्वरस्याथ रक्तादेश्श्वासहिध्मयोः ।
यक्ष्मादेः छर्दिपूर्वेऽथ मदादौ सरणादिके ॥ ४१ ॥

कृच्छ्रे मेहे विद्रधौ च गुल्मे स्यात् पाण्डुशोफयोः ।
उदरे च विसर्पादिकुष्ठान्ते श्वित्रपूर्वके ॥ ४२ ॥





वाते चाष्टादशो रक्तवातादावथ उत्तरे ।
शिरोरोगे वर्त्मरोगे सन्ध्याद्ये दृष्टिगे गदे ॥ ४३ ॥

सर्वगे नासिके कर्णे मुखे गण्डादिके पुनः ।
गुह्ये भगन्दराद्ये च विषभेदे रसायने ॥ ४४ ॥

चतुर्दशो वाजपुष्ट्यवध्यायोऽपि निरूपितः ।
पुनर्योगाश्चिकित्सासु नामादिप्रोदिताः क्रमात् ॥ ४५ ॥

स्युर्द्वादशभिरध्यायैरेवमत्र वितन्यते ।
खण्डैश्चतुर्भिरध्यायैष्षष्ट्या च हृदयप्रियः ॥ ४६ ॥

इत्यायुष्कामीयकल्पो नाम
प्रथमोऽध्यायः ।

---

# द्वितीयोऽध्यायः ।

## शाल्यादिकल्पः ।

॥ अथातः शाल्यादिकल्पं व्याख्यास्यामः ॥

रक्ताद्यः षष्टिकान्ता व्रीहयोऽल्पगुणान्तराः ।
प्रायेण पथ्याश्च हिमा लघवो बद्धवर्चसः ॥ १ ॥

स्वादुपाकरसाः स्निग्धाः श्रेष्ठो गौरोऽत्र षष्टिकः ।
त्रिदोषघ्नः स्थैर्यकरः किञ्चिन्न्यूनगुणोऽसितः ॥ २ ॥

कंगुकोद्रवनीवारश्यामाकादि हिमं लघु ।
तृणधान्यं पवनकृल्लेखनं कफपित्तहृत् ॥ ३ ॥

भग्नसन्धानकृत्तत्र प्रियंगुर्बृंहणी गुरुः ।
रूक्षो गुरुर्यवश्शीतो मेदःपित्तकफान् जयेत् ॥ ४ ॥
पीनसश्वासकासोरुस्तम्भकण्ठत्वगामयान् ।
वृष्यश्शीतो गुरुः स्निग्धो जीवनो वातपित्तहा ॥ ५ ॥
सन्धानकारी मधुरो गोधूमः स्थैर्यकृत्सरः ।
जीवनं तर्पणं हृद्यं हृलादि बुद्धिप्रबोधनम् ॥ ६ ॥
तन्वव्यक्तरसं मृष्टं शीतं लघ्वमृतोपमम् ।
जलस्यानेकरूपस्य विद्याद्गौरवलाघवे ॥ ७ ॥
जांगलानूपवर्दित्वाद्गांगं तोयं त्रिदोषहृत् ।
कफमेदोनिलहरं दीपनं वस्तिशोधनम् ॥ ८ ॥
श्वासकासज्वरहरं पथ्यमुष्णोदकं सदा ।
अनभिष्यन्दि लघु च तोयं कथितशीतळम् ॥ ९ ॥
पित्तयुक्ते हितं दोषेऽप्युषितं तत्त्रिदोषकृत् ।
नांबु पेयं जठरिभिश्शोफिगुल्म्यल्पवह्निभिः ॥ १० ॥
अशक्त्यां सौषधं पेयमल्पं प्राणा हि तन्मयाः ।
न हि तोयाद्विना वृत्तिः स्वस्थस्य व्याधितस्य वा ॥ ११ ॥
आस्यशोषांगसादाद्या मृत्युर्वा तदलाभतः ।
अतोऽत्यन्तनिषेधेन न कचिद्वारि वार्यते ॥ १२ ॥
समस्थूलकृशा भुक्तमध्यान्तःप्रथमांबुपाः ।
उदुंबरभवं तोयमतीसारप्रमेहिणाम् ॥ १३ ॥
तृष्णादाहान्वितानाञ्च तथासृग्दरिणां हितम् ।
सलिलं सुपर्वीजातं वातपित्तहरं हिमम् ॥ १४ ॥
तोयं तरुणतालोत्थं चक्षुष्यं रक्तपित्तनुत् ।
शीतळं दाहतृष्णाघ्नं मेहकृच्छ्रातिसारनुत् ॥ १५ ॥



रंभाकन्दोद्भवं सोमम्मेहकृच्छ्रहरं हिमम् ।
नाळिकेरोदकं स्निग्धं स्वादु वृष्यं हिमं लघु ॥ १६ ॥
तृष्णापित्तानिलहरं दीपनं वस्तिशोधनम् ।
स्वादुपाकरसं स्निग्धमोजस्यं धातुवर्धनम् ॥ १७ ॥
वातपित्तहरं वृष्यं श्लेष्मळं गुरु शीतळम् ।
प्रायः पयोऽत्र गव्यन्तु जीवनीयं रसायनम् ॥ १८ ॥
क्षतक्षीणहितं मेध्यं बल्यं स्तन्यकरं सरम् ।
श्रमभ्रममदालक्ष्मीश्वासकासातितृट्क्षुधः ॥ १९ ॥
जीर्णज्वरं मूत्रकृच्छ्रं रक्तपित्तं च नाशयेत् ।
भवेद्गरीयोतिश्रृतं धारोष्णममृतोपमम् ॥ २० ॥
हितमत्यग्न्यनिद्रेभ्यो गरीयो माहिषं हिमम् ।
अल्पाम्बुपानव्यायामकटुतिक्ताशनैर्लघु ॥ २१ ॥
आजं शोषज्वरश्वासरक्तपित्तातिसारजित् ।
आविकं वातहार्युष्णं श्वासपित्तकफप्रदम् ॥ २२ ॥
ईषद्रूक्षोष्णलवणमौष्ट्रकं दीपनं लघु ।
शस्तं वातकफानाहकृमिशोफोदरार्शसाम् ॥ २३ ॥
मानुषं वातपित्तासृगभिघाताक्षिरोगजित् ।
सेके नस्ये हितं मूर्छामदसन्यासहृत् परम् ॥ २४ ॥
नाळिकेरोद्भवं क्षीरं रक्तवातकफापहम् ।
पामाशिरोरोगहरं रक्तातीसारकृच्छ्रजित् ॥ २५ ॥
कुष्ठे मेहे व्रणे श्वित्रे विरुद्धं स्नेहनं गुरु ।
अम्लपाकरसं ग्राहि गुरूष्णं दधि वातजित् ॥ २६ ॥
मेदश्शुक्रबलश्लेष्मरक्तपित्ताग्निशोफकृत् ।
रोचिष्णु शस्तमरुचौ शीतके विषमज्वरे ॥ २७ ॥

पीनसे मूत्रकृच्छ्रे च रूक्षन्तु ग्रहणीगदे ।
नात्याग्नित्वग्निशायां च ज्वरवीसर्पकुष्ठकृत् ॥ २८ ॥
तक्रं लघु कषायाम्लं दीपनं कफवातजित् ।
शोफोदरार्शोग्रहणीमूत्रकृच्छ्रज्वरारुचीः ॥ २९ ॥
गुल्मप्लीहघृतव्यापद्गरपाण्ड्वामयान् जयेत् ।
तद्वन्मस्तु सरं स्रोतश्शोधि विष्टम्भजिल्लघु ॥ ३० ॥
नालिकेरपयोयुक्तं विपक्वं तक्रमुत्तमम् ।
त्रिदोषशमनं ग्राहि वृष्यं दीपनपाचनम् ॥ ३१ ॥
नवनीतं नवं वृष्यं शीतं वर्णबलाग्निकृत् ।
संग्राहि वातपित्तासृक्क्षयार्शोर्दितकासजित् ॥ ३२ ॥
चक्षुष्यं बालवृद्धानां शस्तं लघु मृदुत्वकृत् ।
क्षीरोद्भवन्तु संग्राहि रक्तपित्ताक्षिरोगजित् ॥ ३३ ॥
शस्तं धीस्मृतिमेधाग्निबलायुश्शुक्रचक्षुषाम् ।
बालवृद्धप्रजाकान्तिसौकुमार्यस्वरार्थिनाम् ॥ ३४ ॥
क्षतक्षीणपरीसर्पशस्त्राग्निग्लपितात्मनाम् ।
वातपित्तविषोन्मादशोषालक्ष्मीज्वरापहम् ॥ ३५ ॥
स्नेहानामुत्तमं शीतं वयसः स्थापनं घृतम् ।
सहस्रवीर्यं विधिभिश्शृतं कर्मसहस्रकृत् ॥ ३६ ॥
मदापस्मारमूर्च्छायाशिरःकर्णाक्षियोनिजान् ।
पुराणं जयति व्याधीन् व्रणशोधनरोपणम् ॥ ३७ ॥
गव्ये क्षीरघृते श्रेष्ठे निन्दिते चाविसंभवे ।
इक्षो रसो गुरुः स्निग्धो बृंहणः कफमूत्रकृत् ॥ ३८ ॥
वृष्यश्शीतोऽस्रपित्तघ्नः स्वादुपाकरसस्सरः ।
विदाहविष्टंभकरो यान्त्रिको मलसङ्करान् ॥ ३९ ॥





शैत्यप्रसादमाधुर्याद्वरस्तत्रापि पौण्ड्रकः ।
फाणितं गुर्वभिष्यन्दि चयकृन्मूत्रशोधनम् ॥ ४० ॥
नातिश्लेष्मकरो धौतस्सृष्टमूत्रशकृद् गुळः ।
प्रभूतकृमिमज्जासृङ्मेदोमांसकफोऽपरः ॥ ४१ ॥
हृद्यः पुराणः पथ्यश्च नवः श्लेष्माग्निसादकृत् ।
वृष्याः क्षतक्षीणहिता रक्तपित्तानिलापहाः ॥ ४२ ॥
मत्स्याण्डिकाखण्डसिताः क्रमेण गुणवत्तराः ।
चक्षुष्यं छेदि तृट्श्लेष्मविषपित्तास्रहिध्मनुत् ॥ ४३ ॥
कुष्ठमेहकृमिच्छर्दिश्वासकासातिसारजित् ।
व्रणशोधनसन्धानरोपणं वातळं मधु ॥ ४४ ॥
नोष्णमुष्णयुतं योग्यमृते च्छर्दिनिरूहतः ।
तैलं स्वयोनिवत्तत्र मुख्यं तीक्ष्णं व्यवायि च ॥ ४५ ॥
त्वग्दोषकृदचक्षुष्यं सूक्ष्मोष्णं कफकृन्न च ।
कृशानां बृंहणायालं स्थूलानां कर्शनाय च ॥ ४६ ॥
बद्धविट्कं कृमिघ्नञ्च संस्कारात्सर्वरोगजित् ।
सतिक्तोषणमैरण्डं तैलं स्वादु सरं गुरु ॥ ४७ ॥
वर्ध्मगुल्मानिलकफानुदरं विषमज्वरम् ।
रुक्शोफौ च कटीगुह्यकोष्ठपृष्ठाश्रयौ जयेत् ॥ ४८ ॥
निम्बजं कफवातघ्नं नात्युष्णं क्रिमिकुष्ठजित् ।
तद्वत् करञ्जजं सुप्तवातेऽपच्यादिके हितम् ॥ ४९ ॥
कटूष्णं सार्षपं तीक्ष्णं कफशुक्रानिलापहम् ।
लघु पित्तास्रकृत् कोठकुष्ठार्शोविषजन्तुजित् ॥ ५० ॥
आक्षं स्वादु हिमं केश्यं गुरु पित्तानिलापहम् ।
ज्योतिष्मतीसमुद्भूतं व्रणकुष्ठकफापहम् ॥ ५१ ॥

बल्यं स्वरकरं सद्यो मेधाबुद्धिविवर्धनम् ।
कृमिघ्नमिंगुदीतैलं तिक्तं लघ्वस्रदोषजित् ॥ ५२ ॥
भृशोष्णतीक्ष्णकटुके तौरवारुष्करोद्भवे ।
विशेषात् कृमिकुष्ठघ्ने तथोर्ध्वाधोविशोधने ॥ ५३ ॥
किन्तु वातकरं पूर्वं परमर्शःकफापहम् ।
नाळिकेरोद्भवं तैलं बृंहणं बलवर्धनम् ॥ ५४ ॥
व्रण्यं त्रिदोषशमनं मधुरं दन्तरोगजित् ।
वसा मज्जा च वातघ्नौ बलपित्तकफप्रदौ ॥ ५५ ॥
मांसानुगस्वरूपौ च विद्यान्मेदोऽपि ताविव ।
दीपनं रोचनं मद्यं तीक्ष्णोष्णं तुष्टिपुष्टिदम् ॥ ५६ ॥
सस्वादु तिक्तकटुकमम्लपाकरसं सरम् ।
सकषायं स्वरारोग्यप्रतिभावर्णकृल्लघु ॥ ५७ ॥
नष्टनिद्रातिनिद्रेभ्यो हितं पित्तास्रदूषणम् ।
कृशस्थूलहितं सूक्ष्मं रूक्षं स्रोतोविशोधनम् ॥ ५८ ॥
वातश्लेष्महरं युक्त्या पीतं विषवदन्यथा ।
मृद्वीकाशर्करादीनां योगे तत्तद्गुणान्वयात् ॥ ५९ ॥
विद्यात् बहुविधं भेदं तस्मिन्युक्त्यैव बुद्धिमान् ।
रक्तपित्तकफोत्क्लेदि शुक्तं वातानुलोमनम् ॥ ६० ॥
विदाहि भृशतीक्ष्णोष्णं हृद्यं रुचिकरं सरम् ।
धान्याम्लं भेदि तीक्ष्णोष्णं पित्तकृत् स्पर्शशीतळम् ॥ ६१ ॥
श्रमक्लमहरं रुच्यं दीपनं बस्तिशूलनुत् ।
शस्तमास्थापने हृद्यं लघु वातकफापहम् ॥ ६२ ॥
मूत्रं गोऽजाविमहिषीगजाश्वोष्ट्रखरोद्भवम् ।
पित्तळं रूक्षतीक्ष्णोष्णं लवणानुसरं कटु ॥ ६३ ॥



कृमिशोफोदरानाहशूलपाण्डुकफानिलान् ।
गुल्मारुचिविषश्वित्रकुष्ठार्शांसि जयेल्लघु ॥ ६४ ॥
ग्रीहिद्रव्यैकदेशोऽयं यथास्थूलमुदाहृतः ।

समीरिता द्रव्यगुणास्समासा-
द्योगेन पाकेन च ते विभिन्नाः ।
निघ्नन्ति रोगान्विविधांश्च तस्मा-
दन्तर्बहिर्युक्तिवशात् प्रयोज्याः ॥ ६५ ॥

इति ग्रीहिद्रव्यकल्पो नाम
द्वितीयोऽध्यायः ।

---

# तृतीयोऽध्यायः ।

---

## औषधकल्पः ।

---

॥ अथात औषधकल्पं व्याख्यास्यामः ॥

मुद्गाढकीमसूरादि शिंबिधान्यं विबन्धकृत् ।
कषायं स्वादुसंग्राहि कटुपाकं हिमं लघु ॥ १ ॥
मेदश्श्लेष्मास्रपित्तेषु हितं लेपोपसेकयोः ।
वरोऽत्र मुद्गोऽल्पचलः कळायस्त्वतिवातळः ॥ २ ॥
राजमाषोऽनिलकरो रूक्षो बहुशकृद्गुरुः ।
उष्णाः कुलत्थाः पाकेऽम्लाश्शुक्राश्मश्वासपीनसान् ॥ ३ ॥

कासार्शःकफवातांश्च घ्नन्ति पित्तास्रदाः परं ।
पर्णिन्यौ तुष्टिदे पुष्टेः प्रोक्ते दोषत्रयापहे ॥ ४ ॥
आनाहार्शश्श्वासकासवातघ्नो रक्तपित्तकृत् ।
वन्यः कुलत्थः क्षयजिन्मेदोदृष्टिविकारनुत् ॥ ५ ॥
निष्पावो वातपित्तास्रस्तन्यमूत्रकरो गुरुः ।
सरो विदाही दृक्शुक्रकफशोफविषापहः ॥ ६ ॥
माषः स्निग्धो बलश्लेष्ममलपित्तकरस्सरः ।
गुरूष्णोऽनिलहा स्वादुः शुक्रवृद्धिविरेककृत् ॥ ७ ॥
फलानि माषवद्विद्यात् काकाण्डोलात्मगुप्तयोः ।
उष्णस्त्वच्यो हिमस्पर्शः केश्यो बल्यास्तिलो गुरुः ॥ ८ ॥
अल्पमूत्रः कटुः पाके मेधाग्निकफपित्तकृत् ।
स्निग्धोमा स्वादुतिक्तोष्णा कफपित्तकरी गुरुः ॥ ९ ॥
दृक्शुक्रहृत् कटुः पाके तद्वद्बीजं कुसुंभजम् ।
नवं धान्यमभिष्यन्दि लघु संवत्सरोषितम् ॥ १० ॥
शीतं पर्पटकं रक्तपित्तमेहज्वरापहम् ।
दूर्वा ज्वरहरा व्रण्या रक्तपित्तविनाशिनी ॥ ११ ॥
स्पर्शासहा व्रणहरा शुक्रस्रावविनाशिनी ।
विष्णुक्रान्ती ज्वरहरा व्रण्या चेतोविकारजित् ॥ १२ ॥
उपोदका गुल्मपित्तविषघ्नी मेहनाशिनी ।
चाङ्गेरी दीपनी चाम्ला पित्तळा पाचनी तथा । ॥ १३ ॥
ग्रहण्यर्शोऽनिलश्लेष्महितोष्णा ग्राहिणी लघुः ।
वृष्योऽग्निकृत्त्रिदोषघ्नस्संग्राही सुनिषण्डकः ॥ १४ ॥
आर्द्रिका तिक्तमधुरा मूत्रळा न च पित्तकृत् ।
त्रिपादी मूत्रदोषघ्नी पित्तासृग्वातकोपजित् ॥ १५ ॥



शोफपाण्डुज्वरहरा तीक्ष्णोष्णा च विशोधिनी ।
ब्राह्मी प्रज्ञाबलकरी तिक्ता पित्तकफापहा ॥ १६ ॥
सप्तलापि तथा शुद्धिकरी कुष्ठाश्मरीहरा ।
मण्डूकपर्णी कफजित् पित्तघ्नी कुष्ठनाशिनी ॥ १७ ॥
त्रिदोषशमनी वृष्या काकमाची रसायनी ।
नात्युष्णा शीतवीर्या च भेदिनी कुष्ठनाशिनी ॥ १८ ॥
शोफोदरार्शसां पथ्या वर्षाभूर्दोषजित्सरा ।
वाराही मेहकुष्ठघ्नी बल्या वृष्या रसायनी ॥ १९ ॥
काक्षीरा वातजित् कोष्णा दीपन्यर्शोतिसारजित् ।
शिलारिर्ज्वरशोफघ्नः सरो रूक्षस्त्रिदोषजित् ॥ २० ॥
शीतळातिचरा रक्तपित्तनेत्रविकारजित् ।
जलदं ज्वरपित्तातिसारकृच्छ्रप्रमेहजित् ॥ २१ ॥
शशश्रुतिर्ज्वरहरा वातवैगुण्यनाशिनी ।
वसुको वातपित्तघ्नो मूत्रकृच्छ्रविनाशनः ॥ २२ ॥
परं कृच्छ्राश्मरीहन्ता तत्समानोऽश्मभेदनः ।
कुमारी गरकासघ्नी चक्षुष्या दीपनी हिमा ॥ २३ ॥
कुशं हिमं वातपित्तमूत्रकृच्छ्रविनाशनम् ।
हिमाः पित्तजितो दर्भकाशेक्षुशरशालयः ॥ २४ ॥
सहदेवी ज्वरहरा रक्तपित्तरुजापहा ।
रक्तपित्तहरी शीता भद्रा कृच्छ्रप्रमेहजित् ॥ २५ ॥
कासश्वासहरं कण्ठ्यं भृङ्गं केश्यं च वर्णदम् ।
कटु तिक्तरसं पित्तश्लेष्मघ्नं ज्वरजिल्लघु ॥ २६ ॥
तामलक्यतिसारघ्नी कामिलापहरा हिमा ।
उष्णो द्रोणः कृमिहरो गुल्मशूलविनाशनः ॥ २७ ॥

तत्पुष्पन्तु विदोषघ्नं हिध्माश्वासारुचीर्जयेन् ।
कुतुंबरं तत्सदृशं सूतिकाशूलजित्परम् ॥ २८ ॥
बलात्रयं स्निग्धशीतं बृंहणं वातपित्तनुत् ।
क्षतक्षीणे नागबला यक्ष्मरोगे च शस्यते ॥ २९ ॥
आन्त्रवातहरी चोष्णा व्रण्या च मृदुकुक्षिका ।
वृष्यश्मरीगुल्महरा रमणी वातनाशिनी ॥ ३० ॥
तण्डुलीयो लघुश्शीतो मदपित्तविषास्रहा ।
सक्षारस्सर्वदोषघ्नो वास्तुको रोचनस्सरः ॥ ३१ ॥
लघुपत्रा तु या चिल्ली सा वास्तुकसमा मता ।
कासश्वासहरी तीक्ष्णा विषघ्नी रक्तपित्तळा ॥ ३२ ॥
आनाहगुल्मशूलार्शोहन्त्री हरितमञ्जरी ।
तुळस्यौ कटुतीक्ष्णोष्णे क्रिमिगुल्मकफापहे ॥ ३३ ॥
अर्शोविषानिलहरे कण्डूपामाव्रणापहे ।
राजक्षवोऽर्शोग्रहणीविषमज्वरनाशनः ॥ ३४ ॥
रामाख्या तुळसी तद्वन्नात्युष्णा रक्तदोषजित् ।
कर्पूरगन्धा तुळसी परमस्रकफापहा ॥ ३५ ॥
पत्तूरो दीपनः स्निग्धः प्लीहार्शःकफवातजित् ।
मिश्यात्युष्णा वातकफज्वरश्लीपदनाशिनी ॥ ३६ ॥
मूत्रदोषक्रिमिहरा झरसी वातळान्यनुत् ।
भूशिरीषं सरं पित्तकफरक्तविकाराजित् ॥ ३७ ॥
गोजिह्वा कफपित्तघ्नी चक्षुष्या रक्तपित्तजित् ।
समंगा दीपनी वातपित्तरक्तातिसाराजित् ॥ ३८ ॥
कुक्षिरुग्ज्वरवातघ्नं दीपनं बृहतीद्वयम् ।
तत्फलं कृमिकुष्ठघ्नं रूक्षं वातकफौ जयेत् ॥ ३९ ॥



श्वासकासज्वरहरा कण्टकारी विशेषतः ।
तद्वन्मौहूर्तिकी हृद्या दोषघ्नी ग्रहणीहरा ॥ ४० ॥
अचक्षुष्याः पुनश्शेषा बृहत्यः कीटवर्धनाः ।
ज्वरातिसारपवनपित्तघ्न्यौ दीप्तिदे स्थिरे ॥ ४१ ॥
गोक्षुरं ज्वरहृत् पित्तवातघ्नं स्रावकृच्छ्रजित् ।
मायूरिका रक्तपित्तहरा वर्ण्या ज्वरापहा ॥ ४२ ॥
अपामार्गोऽतिसारघ्नो ज्वरहा वह्निदीपनः ।
अजगन्धाग्निकृद्गुल्मशूलातीसारवातजित् ॥ ४३ ॥
शरपुंखो वातकफौ मुखदन्तरुजां जयेत् ।
वृश्चिकाळी वातपित्तगुल्मशूलातिसारजित् ॥ ४४ ॥
नीली केश्या वातपित्तकण्डूव्रणविनाशिनी ।
चित्रकोऽग्निसमः पाके शोफार्शःकृमिकुष्ठहा ॥ ४५ ॥
दीपनस्सूरणो रुच्यः कफघ्नो विशदो लघुः ।
वनसूरणकन्दस्तु विशेषादर्शसां हितः ॥ ४६ ॥
अघोरी चित्तदोषघ्नी वातभूतविषापहा ।
अविघ्ना क्रिमिशोफघ्नी बालानां जठरार्तिनुत् ॥ ४७ ॥
उद्दळा शीतळा पित्तकफजिन्मेहनाशिनी ।
क्षेमदं वातपित्तघ्नं क्षतमर्मविकारजित् ॥ ४८ ॥
करीरा पित्तरक्तोत्थरोगघ्नी नेत्ररोगजित् ।
भूकेसरोऽर्शोरोगघ्नो व्रणजिद्गर्भसंगहा ॥ ४९ ॥
लक्ष्मीः पित्तहरा वातश्लेष्मळा भूतिगर्भधृक् ।
इन्द्रवल्ली ज्वरहरा वातघ्नी वृद्धिनाशिनी ॥ ५० ॥
शंखपुष्पी सरा तीक्ष्णा कफक्रिमिविषापहा ।
मालतीपल्लवं व्रण्यं तत्सुमं नेत्ररोगजित् ॥ ५१ ॥

कामुका कफजिद् व्रण्या टूका वातविकारजित् ।
कारवेल्लं तिक्तकटु कृमिपित्तकफप्रणुत् ॥ ५२ ॥

कर्कोटकं ततो न्यूनं तन्महत्तु ततोऽवरम् ।
बिंबी स्यात् कफपित्तघ्नी वस्त्यामयविनाशनी ॥ ५३ ॥

जीवनी बृंहणी कण्ठ्या गुर्वी वृष्या रसायनी ।
चक्षुष्या सर्वदोषघ्नी जीवन्ती मधुरा हिमा ॥ ५४ ॥

मर्कटी वातपित्तघ्नी वृष्या यक्ष्मविनाशनी ।
पटोलपत्रं पित्तघ्नं वल्ली चास्य कफापहा ॥ ५५ ॥

फलं त्रिदोषशमनं मूलश्चास्य विरेचनम् ।
ज्वरातिसारशोफघ्नो दुस्पर्शः कफपित्तहा ॥ ५६ ॥

चविका पिप्पलीमूलं वक्ष्यमाणोपणोपमम् ।
शारिवे शोषतृष्णाघ्न्यौ पित्तघ्न्यौ रक्तशुद्धिदे ॥ ५७ ॥

विदारी वातपित्तघ्नी कण्ठ्या बल्या च मूत्रळा ।
कर्कटी कफपित्तघ्नी कुष्ठशोफव्रणापहा ॥ ५८ ॥

कोशातक्यौ वातकफौ जयेयुश्चोर्ध्वरेकदाः ।
सूप्यपर्णीद्वयं वातपित्तजित् क्षयनाशनम् ॥ ५९ ॥

ऋद्धी तु कफवातघ्न्यौ फलं दृक्शुक्रनाशनम् ।
अवरोष्णा कफहरा तीक्ष्णा वातहरा परम् ॥ ६० ॥

प्रसारणी स्वादुपाका वातघ्नी मूत्रदोषजित् ।
कामिलाज्वरवातास्रत्रिदोषघ्नी स्मृतामृता ॥ ६१ ॥

गारुडी सर्वविषजित् कुष्ठघ्नी कफवातहा ।
रूक्षोष्णाग्निशिखा क्ष्वेळवती स्याद्रेचनी परम् । ॥ ६२ ॥

मात्राविदा प्रयुक्ता सा रसायन्युदरापहा ।
शोफवातास्रदोषघ्नी चक्षुष्या पत्रकण्टका ॥ ६३ ॥



दीपनं वातपित्तघ्नं गुल्मजिच्चाम्लवेतसम् ।
मूर्वा त्रिदोषशमनी विषशोफज्वरापहा ॥ ६४ ॥

गुञ्जा जयेद्वातरक्तं कफं कुष्ठविषक्रिमीन् ।
कूश्माण्डवल्ली दोषघ्नी सन्निपातज्वरापहा ॥ ६५ ॥

तत्फलं क्षयकासघ्नं वस्तिशुद्धिकरं गुरु ।
वस्तिदोषहरं शीतं कालिंगोर्वारुचिर्भिटम् ॥ ६६ ॥

कफपित्तहरं पक्वफलं कोष्णञ्च वातजित् ।
मधुरं गुरु विष्टंभि दोषळं मत्तचिर्भिटम् ॥ ६७ ॥

तुंबी वृष्यास्यशोषघ्नी रुच्या दाहज्वरापहा ।
कटुतुंबी तदुत्कृष्टा श्वासगुल्मविषापहा ॥ ६८ ॥

कर्कारुर्वातपित्तघ्नी तत्फलं वस्तिशोधनम् ।
त्रपुसी च तथा प्रोक्ता फलं वृष्यञ्च मूत्रळम ॥ ६९ ॥

वज्रवल्ली श्लेष्मपित्तगुदकीलहरा भेकत् ।
स्फोट्याभुजंगं शोफघ्नं गुल्मशूलहरं परम् ॥ ७० ॥

वृष्या शतावरी स्वादुर्बृंहणी वातपित्तजित् ।
रक्तवातज्वरश्वासवस्त्यामयविनाशिनी ॥ ७१ ॥

पाठा ज्वरातिसारार्शोवातवीसर्पनाशिनी ।
क्षेत्रज्ञभूषा ज्वरजिच्छोफघ्नी वातनाशिनी ॥ ७२ ॥

अहिंस्रा वातकफजिच्छोफपामाज्वरापहा ।
परूषी पिटकाशोफज्वरघ्नी कफपित्तजित् ॥ ७३ ॥

तांबूलं कटु सक्षारं रुच्यमुष्णं कफप्रणुत् ।
पद्मं शीतं रक्तपित्तज्वदाहप्रमेहनुत ॥ ७४ ॥

पुष्पे मृणाळे कन्दे च गुरुता स्याद्यथोत्तरम् ।
केसरं वर्णकृद् वृष्यं बीजं तृष्णावमिप्रणुत् ॥ ७५ ॥

उत्पलं मधुरं स्निग्धं चक्षुष्यं रक्तपित्तनुत्
नीलोत्पलं तथा तद्वत् प्रायेण कुमुदद्वयम् ॥ ७६ ॥

चण्डा शोकशिरोरोगरक्तपित्तकफापहा ।
मालूकं स्वादु शीतञ्च विष्टंभि गुरु दोषकृत् । ॥ ७७ ॥

प्रायेण तद्वदेव स्युराढ्रूपान्यप्यनेकधा ।
अर्कालर्कौ वातकफक्रिमिकुष्ठोदरापहौ ॥ ७८ ॥

शीतः कषायश्चक्षुष्यो नन्द्यावर्तः कफास्रजित् ।
पौष्करं ज्वरशूलघ्नं कासवातकफापहम् ॥ ७९ ॥

वैरी शीतः पित्तरक्तव्रणघ्नो मेहजित् परम् ।
सुवर्चा वातपित्तघ्नी व्रणशोफहरा हिमा ॥ ८० ॥

भार्ङ्गी मरुत्कफहरा कासश्वासज्वरप्रणुत् ।
पारन्ती मेहकुष्ठघ्नी पामाव्रणविसर्पजित् ॥ ८१ ॥

कठिल्लं पित्तकफजित् पामामूर्धव्रणापहम् ।
श्रोणिका मारुतहरा गुदकीलरुजापहा ॥ ८२ ॥

अत्रिका तु त्रिदोषघ्नी मधुरा सृष्टमूत्रविट् ।
जीवन्तकः पित्तकफकुष्ठमूर्धरुजापहः ॥ ८३ ॥

क्रिमिकासकफोत्क्लेदान् कासमर्दो जयेत्सरः ।
आवीरन्तु सरं पित्तकफजिन्मेहनाशनम् ॥ ८४ ॥

विषघ्नी भूतविषहा वातजिच्चित्तदोषजित् ।
रजकारिर्दृष्टिशुक्रं जयेद्रक्तोद्भवा रुजः ॥ ८५ ॥

जवा प्रदरकण्डूतिपित्तजित् केशवर्धिनी ।
कार्पासी कृच्छ्रशोफघ्नी तद्बीजं वमिनाशनम् ॥ ८६ ॥

गण्डमाआज्वरहरा निर्गुण्डी कफवातजित् ।
उष्णं सहचरं ग्राहि सर्ववातहरं परम् ॥ ८७ ॥



प्रियालमज्जा मधुरो वृष्यः पित्तानिलापहः ।
वृषन्तु वमिकासघ्नं रक्तपित्तहरं परम् ॥ ८८ ॥

गान्धारीयुगलं स्थूलमरिचं कफवातजित् ।
रूक्षोष्णं दीपनं रूच्यं रक्तपित्तप्रकोपकृत् ॥ ८९ ॥

अभिष्यन्द्यान्त्रशूलघ्नं वीर्येण च मदूत्तरम् ।
प्रपुण्डरीकं चक्षुष्यं शीतं रक्तप्रसादनम् ॥ ९० ॥

दन्ती तीक्ष्णोष्णकटुका कफवातविनाशिनी ।
अर्शोव्रणाश्मरीगुल्मजठरघ्नी विशोधनी ॥ ९१ ॥

मदनं वमनात्तत्तत्कफवातविकारनुत् ।
पञ्चांगुलस्सरो रक्तवातगुल्मोदरापहः ॥ ९२ ॥

अच्छैरण्डं पित्तकरं विरेकादन्यरोगजित् ।
रूक्षोष्णं जठरानाहगुल्मवृद्धितुनीप्रणुत् ॥ ९३ ॥

अत्युष्णं श्लेष्मरोगघ्नं कृमिभ्रमनिलापहम् ।
आन्त्रशूलहरं बीजं कुबेराक्ष्या दलं तथा । ॥ ९४ ॥

रञ्जिला कामिलाजेत्री पत्रं रक्तप्रसादनम् ।
रक्तफलो वृद्धिहरो वातरक्तविकारजित् ॥ ९५ ॥

वातास्रशोफनाशिन्यौ केतक्यावल्पशीतले ।
सडकी वातपित्तघ्नी मूत्रसंगास्रदोषजित् । ॥ ९६ ॥

उद्रिक्तपित्तान् जयति त्रीन् दोषान् स्वादु डाडिमम् ।
त्वक् तिक्तकटुका स्निग्धा मातुलुङ्गस्य वातजित् ॥ ९७ ॥

बृंहणं मधुरं मांसं वातपित्तहरं गुरु ।
केसरं वातपित्तघ्नं वमिहिध्मारुचीर्जयेत् ॥ ९८ ॥

दोषघ्नं दीपनं रूक्षमम्लं दन्तशठं हिमम् ।
किञ्चिन्मृदूनं ततो रूक्षमपित्तघ्नं महाम्लकम् ॥ ९९ ॥

ऐरावतादि प्रायेण नातिपित्तहरं हिमम् ।
फलं कदल्यास्तु हिमं तृष्णापित्तनाशनम् ॥ १०० ॥
तत्कन्दं रक्तपित्तघ्नं दाहमूत्ररुजापहम् ।
फलं सिंहिकदल्यास्तु शीतं पित्तानिलापहम् ॥ १०१ ॥
कफपित्तहरं शीतं पथ्यं कुष्माण्डं लघु ।
मोचाफलन्तु विष्टम्भि बृंहणं वातपित्तजित् ॥ १०२ ॥
महामोचाफलं बल्यं गुरु दोषहरं सरम् ।
एतद्भेदेषु चाप्यूह्या युक्त्या स्वल्पान्तरा गुणाः ॥ १०३ ॥
गुरुत्वं कफकारित्वं चिन्त्यं पक्वेषु तेष्वपि ।
बिल्वं वातकफच्छर्दिहिध्मारुच्यतिसारजित् ॥ १०४ ॥
तर्कारी कोष्ठरोगातीसारवातकफापहा ।
वातं कफञ्च काश्मर्यः पाटलाटुण्टुकं जयेत् ॥ १०५ ॥
कफपित्तप्रमेहघ्नौ लोध्रौ नेत्रहितौ हिमौ ।
तत्र श्वेतो गुणोत्कृष्टस्तावरोऽल्पगुणोऽल्प च ॥ १०६ ॥
कृमिज्वरहरो निंबः कुष्ठवातकफापहः ।
कालशाकं तिक्तकटु कफवातहरं लघु ॥ १०७ ॥
दीपनं पाचनं स्वर्यं रुच्यं शोफगरप्रणुत् ।
गृञ्जनो वातपित्तघ्नः शोफगुल्मज्वरापहः ॥ १०८ ॥
तस्य पल्लवमप्येवं कृमिनेत्रविकारजित् ।
पलाशो वातजिद् गुल्मशूलघ्नः कृमिनाशनः ॥ १०९ ॥
अर्जुनः किंशुकश्चोभावौदर्यौ वातनाशनौ ।
आरग्वधस्त्वरश्श्वित्रकुष्ठक्रिमिकफापहः ॥ ११० ॥
कलशाम्भः श्रीपदघ्नो वातजिद् गुल्मशोफहा ।
कुशाम्भो वातजिद्गुल्मशूलशोफविनाशनः ॥ १११ ॥



पित्तघ्नं तत्फलं रुच्यं पक्वं सस्वादु वातजित् ।
वट्टीजवल्कं मेहघ्नं पत्रं शोफानिलापहम् ॥ ११२ ॥
करञ्जयुग्मन्तु सरं दीपनं कफवातजित् ।
जंबूद्वयं हिमं रक्तपित्तातीसारमेहजित् ॥ ११३ ॥
न्यग्रोधोदुंबराश्वत्थप्लक्षाणां पल्लवास्त्वचः ।
कषायाः शीतलाः पथ्या रक्तपित्तातिसारिणाम् ॥ ११४ ॥
एवं कपीतनस्यापि स्मृतं तैः पञ्चवल्कलम् ।
अरलुद्वितयं चोष्णं वातशोफविनाशनम् ॥ ११५ ॥
मोदकः प्रदरं रक्तवातं शोफञ्च नाशयेत् ।
उष्णशिशरीषो विषहा कषायः कफवातहा ॥ ११६ ॥
वन्ध्योऽस्यानुगुणश्छर्दिकरो व्रणकृमिप्रणुत् ।
वातपित्तास्रकृद्बालं बद्धास्थि कफपित्तकृत् ॥ ११७ ॥
गुर्वाम्रं वातजित् पक्वं स्वाद्वम्लं कफशुक्रकृत् ।
सहकाररसो हृद्यो रुच्यश्च कफवातजित् ॥ ११८ ॥
तद्बीजं वातजित् ग्राहि ज्वरहृद्कुक्षिरोगनुत् ।
आम्रातकं वातपित्तहरं किञ्चित् कफप्रदम् ॥ ११९ ॥
कपित्थमामं कण्ठघ्नं दोषलं दोषघाति तु ।
पक्वं हिध्मावमथुजित्सर्वं ग्राहि विषापहम् ॥ १२० ॥
वातलं बकुलं ग्राहि दन्तानां स्थापनं परम् ।
पनसस्य फलं बालं कफकृद्वातपित्तजित् ॥ १२१ ॥
अग्निमान्द्यकरं पक्वं दाहतृष्णानिवारणम् ।
अर्शोविवर्धनं बीजं स्वादु बद्धमलं गुरु ॥ १२२ ॥
फलानामवरं स्वादु लिकुचं सर्वदोषकृत् ।
उष्णोऽसनः कफमरुत्कुष्ठशोफविनाशनः ॥ १२३ ॥

कारस्करो जयेत् कुष्ठं शोफं वातं सरक्तकम् ।
खदिरो दन्तरोगेषु मेहे कुष्ठे च शस्यते ॥ १२४ ॥
तालस्य मञ्जरी वातकफशोफविनाशिनी ।
मसूरिकादौ तद्बालफलतोयं हितं हिमम् । ॥ १२५ ॥
केरमूलं वातकफौ जयेत् प्रदरहृत्सुमम् ।
नालिकेरं गुरु स्निग्धं पित्तघ्नं स्वादु शीतलम् ॥ १२६ ॥
शुष्कं तत् कृमिशूलघ्नं दन्तरोगविनाशनम् ।
भेदी सम्मोहकृत् पूगः तत्पुष्पं रक्तशोफजित् ॥ १२७ ॥
स्नुही योगविशेषेण विरेकात्सर्वदोषजित् ।
लतास्नुही ततो न्यूना स्वर्णक्षीर्यतिरूक्षणी ॥ १२८ ॥
सप्तच्छदो वातकफौ जयेत् कुष्ठज्वरादिकान् ।
कम्पिल्योऽपि तथा भेदी दुष्टव्रणविशोधनः ॥ १२९ ॥
रक्तार्शस्यतिसारे च ज्वरादौ कुटचो हितः ।
स्पृका ध्यामकमप्यस्रदोषं वातकफौ हरः ॥ १३० ॥
उशीरं शीतळं तिक्तं विशेषात् पाचनं लघु ।
ज्वरातिसारवमथुरक्तपित्तक्षतापहम् ॥ १३१ ॥
वाळकं चाप्येवमुक्तं विशिष्य कफहारि च ।
मधुकं रक्तपित्तघ्नं व्रणशोधनरोपणम् ॥ १३२ ॥
गुरु स्वादु हिमं वृष्यं चक्षुष्यं स्वरवर्णकृत् ।
अत्यन्तशीतळा मांसी कफघ्नी त्रिविदाहजित ॥ १३३ ॥
तकरं दृष्टिदोषघ्नं शीतं भूतविषापहम् ।
चोरकः शीतळो रुच्यस्त्रिदोषघ्नोऽस्रदोषजित् ॥ १३४ ॥
अश्वगन्धा हिमा स्वादुर्वृष्या तिक्तरसान्विता ।
त्रिदोषशमनी वस्या क्षयकासज्वरापहा ॥ १३५ ॥



रास्नोष्णा सकषाया च ज्वरवातकफापहा ।
वचा बुद्धिप्रदा कण्ठ्या परं दीपनपाचनी ॥ १३६ ॥
अन्त्रशूलप्रशमनी कफकुष्ठातिसारजित् ।
विषाद्वयं पित्तकफज्वरातीसारनाशनम् ॥ १३७ ॥
कटुका कफपित्तघ्नी रेचनी ज्वरनाशिनी ।
पीतरोहणिका शीता तीक्ष्णा नेत्रविकारजित् ॥ १३८ ॥
नागरं दीपनं वृष्यं ग्राहि हृद्यं विबन्धनुत् ।
रुच्यं जयेद्वातकफौ तद्वत्र ग्राहि चार्द्रकम् ॥ १३९ ॥
कुष्ठं त्रिदोषज्वरहृत् गरघ्नं केशवर्धनम् ।
त्रिवृत् कषायमधुरा कटुपाका विशोधनी ॥ १४० ॥
कफपित्तप्रशमनी वातळा गुल्मशोफनुत् ।
अग्रग्राह्यतितीक्ष्णं स्यान्मेदःकासकफान् जयेत् ॥ १४१ ॥
कुण्डली वातपित्तघ्नी कुष्ठमेहव्रणप्रणुत् ।
लोहिनी वातजित् कुष्ठशोफघ्न्यस्रप्रसादनी ॥ १४२ ॥
हारिद्रापिप्पली वातकफघ्नी दन्तरोगजित् ।
लशुनो भृशतीक्ष्णोष्णः कटुपाकरसस्सरः ॥ १४३ ॥
हृद्यः केश्यो गुरुर्वृष्यः स्निग्धो रोचनदीपनः ।
किलासकुष्ठगुल्मार्शोमेहक्रिमिकफानिलान् ॥ १४४ ॥
सहिध्मापीनसश्वासकासान् हन्त्यस्रपित्तकृत् ।
पलाण्डुस्तद्गुणन्यूनो न च पित्तास्रकोपकृत् ॥ १४५ ॥
कफवातार्शसां पथ्यः स्वेदेऽभ्यवहृतौ तथा ।
कटुतिक्ते निशे कुष्ठमेहपित्तकफापहे ॥ १४६ ॥
प्रलेपाज्जयतः कण्डूं शोफं दुष्टव्रणं विषम् ।
कळञ्जो मदकृद्वातकफोत्थानेकरोगजित् ॥ १४७ ॥

धूमपत्रं भेदि वातकफकृम्यास्यरोगजित् ।
सुगन्धं श्यामपत्रन्तु दीपनं वातनाशनम् ॥ १४८ ॥
देवदारु कटु स्निग्धं वातश्लेष्महरं लघु ।
गरकासशिरःकर्णदन्तरोगान् विनाशयेत् ॥ १४९ ॥
सरळं लघु तीक्ष्णोष्णं कफवातविनाशनम् ।
कटु तीक्ष्णोष्णमगरु स्निग्धं वातकफापहम् ॥ १५० ॥
कृष्णागरु त्रिदोषघ्नं कुष्ठश्वासक्षयापहम् ।
चन्दनं शीतळं तिक्तं रक्तपित्तप्रसादनम् ॥ १५१ ॥
विषान्तर्दाहवीसर्पश्रमनुचक्षुषो हितम् ।
रक्तचन्दनमप्येवं विशेषाद्रक्तशुद्धिकृत् ॥ १५२ ॥
मञ्जिष्ठा तिक्तमधुरा शीता रक्तप्रसादिनी ।
पत्तंगो रक्तदोषघ्नो मुखरोगव्रणप्रणुत् ॥ १५३ ॥
पूतिगन्धी वातकफज्वरग्रहशिरोर्तिनुत् ।
कैराती कफजित् श्वासक्षतकासज्वरान् जयेत् ॥ १५४ ॥
स्थौणेयं रक्तपित्तघ्नं रोचनं कफवातजित् ।
लवंगं शोषहिक्काघ्नं सुगन्धं कफवातजित् ॥ १५५ ॥
अरिमेदो वातमेदःकफजाड्यामयापहः ।
अर्कवल्यस्तदा कण्डूपामाकुष्ठादिनाशिनी ॥ १५६ ॥
मधूकपुष्पं पित्तघ्नं तृष्णाज्वरहरं परम् ।
मर्कपुष्पं सुगन्धाढ्यं वातपित्तकफान् जयेत् ॥ १५७ ॥
कारिपुष्पं शीतरूक्षं कफमेहशिरोर्तिनुत् ।
कफघ्नमस्रदोषघ्नं कुङ्कुमं व्रणरोपणम् ॥ १५८ ॥
सूर्यावर्तहरं श्रेष्ठं गन्धानां वातनाशनम् ।
फलिनी नागपुन्नागजंबूदळसुमानि च ॥ १५९ ॥



एतानि पञ्च पुष्पाणि त्रिदोषशमनानि हि ।
द्राक्षा फलोत्तमा वृष्या चक्षुष्या सृष्टमूत्रविट् ॥ १६० ॥
गुर्वी शीता हन्ति वातरक्तपित्तमदात्ययान् ।
तद्वदेव च खर्जूरं क्षतक्षयहितं परम् ॥ १६१ ॥
पथ्या सरा सर्वरोगान् जयेद्वातकफोत्तरान् ।
तद्वदामलकं शीतमम्लं पित्तकफापहम् ॥ १६२ ॥
आक्षं केश्यं तद्गुणञ्च त्रिफला तैस्त्रिदोषजित् ।
जातीफलं केसरं च मदकार्यनिसारजित् ॥ १६३ ॥
माशीफलमतीसारमुख्यगुह्यव्रणापहम् ।
एलं हिध्मामवातघ्नं दीपनं मूत्रकृच्छ्रजित् ॥ १६४ ॥
विळंगं कटु मेदोघ्नं कृमिश्लेष्मप्रसेकजित् ।
अर्शोतिसारशूलघ्नं कटुरिन्द्रयवोऽग्निकृत् ॥ १६५ ॥
तेजोवती वातकफगळजिह्वामयापहा ।
वाकुची कृमिकुष्ठघ्नी तिक्ता कफविनाशिनी ॥ १६६ ॥
धान्याकं स्वादुपाकञ्च शूलाजीर्णविबन्धनुत् ।
कटु ज्वरहरं रुच्यं तृष्णाघ्नं कफपित्तजित् ॥ १६७ ॥
क्षतबीजन्त्वतीसारग्रहणीमलदोषजित् ।
काकोळीयुगळं वातनाशनं स्वादु बृंहणम् ॥ १६८ ॥
पित्तप्रकोपि तीक्ष्णोष्णं रूक्षं दीपनपाचनम् ।
रसे पाके च कटुकं कफघ्नं मरिचं लघु ॥ १६९ ॥
स्वादुपाक्यार्द्रमरिचं नातितीक्ष्णं गुरु स्मृतम् ।
शूकोषणन्तूषणवत् कृमिशत्रुर्विळंगवत् ॥ १७० ॥
सर्षपं कटु तीक्ष्णोष्णं कफमारुतकुष्ठजित् ।
तीक्ष्णोष्णं कटुपाकञ्च रुच्यं मेधाग्निवर्धनम् ॥ १७१ ॥

जीरकाणां चतुष्कश्च गन्धाढ्यं कफवातजित् ।
कालानुसारी वातघ्नी पिटकार्शोतिसारजित् ॥ १७२ ॥
श्लेष्मळा स्वादुशीतार्द्रा गुर्वी स्निग्धा च पिप्पली ।
सा शुष्का विपरीतातः स्निग्धा वृष्या रसे कटुः ॥ १७३ ॥
शूलघ्नो दीप्यको रूक्षस्सतिक्तकटुको लघुः ।
उष्णः कफानिलहरो दीपनः क्रिमिनाशनः ॥ १७४ ॥
अजाजिका सुगन्धा च गुणैः पूर्ववदुच्यते ।
कशजं स्नेहनं वातपित्तकण्डूहरं हिमम् ॥ १७५ ॥
शताह्वा कटुतिक्ता च स्निग्धोष्णा कफवातजित् ।
कतकस्य फलं शीतं रक्तपित्तप्रसादनम् ॥ १७६ ॥
स्रावहृद्दाहतृष्णाघ्नं हितं कृच्छ्रप्रमेहयोः ।
भल्लातकस्य त्वङ्मांसं बृंहणं स्वादु शीतळम् ॥ १७७ ॥
तदस्थ्यग्निसमं मेध्यं कफवातहरं परम् ।
कोलमज्जा तु मधुरस्तृट्छर्दिश्वासकासजित् ॥ १७८ ॥
वार्त्ताँमज्जापि तद्वत्स्यात् स्नेहनो दोषनाशनः ।
शीतळा कटुका रूक्षा कफघ्नी गजपिप्पली ॥ १७९ ॥
तक्कोलं श्वासकृच्छ्रार्शोविषदोषत्रयापहम् ।
मसूरी कटुतीक्ष्णोष्णा कफवातविनाशिनी ॥ १८० ॥
हृद्या गन्धोत्तमा कासश्वासवैगुण्यनाशिनी ।
त्वच्यो मृगमदस्नेहो वृष्यो वातकफापहः ॥ १८१ ॥
कृष्णं मदकरं सर्ववातगुल्मप्रमेहजित् ।
हिंगु वातकफानाहशूलघ्नं पित्तकोपनम् ॥ १८२ ॥
सिक्थकं वातमत्यग्निं व्रणभेदांश्च नाशयेत् ।
श्रीवेष्टं कफपित्तघ्नं व्रण्यं भूतज्वरापहम् ॥ १८३ ॥



निर्यासः श्वासकासघ्नो ग्राही वातातिसारजित् ।
गुल्गुलुस्तिक्तकटुकस्सकषायो रसायनः ॥ १८४ ॥
क्लेदमेदोनिलश्लेष्मगण्डकुष्टापचिक्रिमीन् ।
पिटकाग्रन्थिशोफांश्च हन्त्युष्णः स्रंसनो लघुः ॥ १८५ ॥
पञ्चमस्तु क्षतश्वासकासवातविकारहा ।
पारक्कं वातकफजिद्वातवैगुण्यकासजित् ॥ १८६ ॥
ग्रन्थिर्ग्रन्थिप्रशमना शिरोरोगत्रिदोषजित् ।
देवधूपो वातरक्तशोफव्रणविनाशनः ॥ १८७ ॥
कुन्दुरुष्कं वातकफशोफमूर्धरुजापहम् ।
लाक्षा सद्यःक्षतहरा केश्या ज्वरगरप्रणुत् ॥ १८८ ॥
नायको वातकफहा शोफगुल्मज्वरान् जयेत् ।
विष्यन्दि लवणं सर्वं सूक्ष्मं सृष्टमलं विदुः ॥ १८९ ॥
वातघ्नं पाकि तीक्ष्णोष्णं रोचनं कफपित्तकृत् ।
सैन्धवं तत्र सस्वादु वृष्यं हृद्यं त्रिदोषजित् ॥ १९० ॥
लघ्वनुष्णं दृशः पथ्यमविदाह्यग्निदीपनम् ।
सौवर्चलं विबन्धघ्नं विळं वातानुलोमनम् ॥ १९१ ॥
सामुद्रं श्लेष्मळं तीक्ष्णमौद्भिदं क्लेदनं कटु ।
सौवर्चलोपमं कृष्णं स्यान्महालवणं तथा ॥ १९२ ॥
वातास्रकृच्छ्रशोफघ्नं द्विज्यादौ सैन्धवादिकम् ।
अन्नभेदी दीपनस्स्यान्मलशुद्धिकरः परम् ॥ १९३ ॥
क्षारयुग्मं वातकफगुल्मार्शोजठरापहम् ।
हेमक्षारो नेत्ररोगकफशोफविनाशनः ॥ १९४ ॥
स्फटिकाख्यो नेत्ररोगे वक्त्रगुह्यव्रणे हितः ।
शंखक्षारो गुह्यपामाक्षतदग्धव्रणापहः । ॥ १९५ ॥

रसकर्पूरमखिलदुष्टव्रणहरं परम् ।
सौवीरं भेदि शोफघ्नं दुष्टव्रणविशोधनम ॥ १९६ ॥

शुक्तिक्षारः स्पर्शशीतो रक्तवाताग्निदाहजित् ।
महाक्षारो दुष्टशोफव्रणाजिज्ज्वरनाशनः ॥ १९७ ॥

पीतस्तथा न्यूनगुणस्तथाप्यल्पगुणोऽरुणः ।
प्रायस्सर्वश्च तीक्ष्णोष्णः क्षारः क्रिमिहरो लघुः ॥ १९८ ॥

पित्तास्रदूषणः पाकी छेद्यहृद्यो विदारणः ।
अपथ्यस्सोऽतियुक्तस्स्याच्छुक्रौजःस्नेहचक्षुपाम् ॥ १९९ ॥

सस्वादुतिक्तं छर्दिघ्नं रूक्षं कर्पूरमुच्यते ।

सस्वादुतिक्तं कफपित्ततृष्णा-
मदभ्रमच्छर्द्यतिसारमेहान् ।
हृद्रोगमूर्छायविषाग्निसादान्
कर्पूरमामं शमयेत् क्षणेन ॥ २०० ॥

धूपराजाः कफशिरोरोगपीनसनाशनाः ।
शंखोदधिमले शीते कपाये चातिलेखने ॥ २०१ ॥

शुक्तिका च नकं मेदःकफशोफविनाशने ।
विद्रुमद्रवमास्योत्थरोगशोफहरं हिमम् ॥ २०२ ॥

तुत्थश्च शिखितुत्थश्च नेत्ररोगव्रणापहम् ।
विशदो गैरिकः स्निग्धः कपायमधुरो हिमः ॥ २०३ ॥

ग्रीष्मेऽर्कतप्ता गिरयो जतुतुल्यं वमन्ति यत् ।
हेमरूप्याद्यंशयुतं शिलाजतु तदुच्यते ॥ २०४ ॥

सर्वरोगप्रशमनं विधियुक्तं त्रिदोषजित् ।
अत्र गोमूत्रगन्धाढ्यं गुल्गुल्वाभं वरं मृदु ॥ २०५ ॥



कन्नारं शिरसः शूलं शोफं वातकफौ जयेत् ।
कफघ्नी व्रणवातघ्नी मनोह्वा लेखनी सरा ॥ २०६ ॥

स्निग्धं कषायमधुरमलं व्रणविपप्रणुत् ।
गन्धकं त्वग्विकारेपु प्रशस्तं स्याद् व्रणेपु च ॥ २०७ ॥

हरवीर्यं महावीर्यं ज्वरकुष्ठव्रणादिकान् ।
योगप्रयोगभेदेन सर्वरोगान् विनाशयेत् ॥ २०८ ॥

हिंगुळं तु व्रणे गुल्मे सन्निपातज्वरे हितम् ।
कषायमधुरे शीते लेखने माक्षिकाञ्जने ॥ २०९ ॥

रक्तपित्तविपच्छर्दिहिक्काघ्ने दृक्प्रसादने ।
सहस्रवेध्यतीसारं रक्तजं पवनं जयेत् ॥ २१० ॥

कृष्णाभ्रन्तु विशुद्धं स्यात् शीतं सर्वप्रमेहजित् ।
कान्तद्वयं गुल्मशूलजठराध्माननाशनम् ॥ २११ ॥

किट्टं पित्ते कामिलायां कुष्ठेऽर्शसि च शस्यते ।
चक्षुष्यं कृष्णलोहन्तु शीतं तिक्तकपायकम् ॥ २१२ ॥

लेखनं वातळं शोफक्रिमिपित्तकफप्रणुत्
कृष्णसीसं प्रमेहघ्नं मेदोनिलहरं परम् ॥ २१३ ॥

विशदं पाण्डुरोगघ्नं चक्षुष्यं व्रणनाशनम् ।
नाकं जयेत् गुल्मशोफौ त्रपुसीसे च तद्गुणे ॥ २१४ ॥

कंसं रूक्षं लेखनञ्च तिक्तं पित्तकफापहम् ।
कटुपाकरसं ताम्रं शीतळं कफवातजित् ॥ २१५ ॥

वातपित्तहरं रूप्यं स्वादुपाकञ्च लेखनम् ।
सुवर्णं बृंहणं स्निग्धं मधुरं रसपाकयोः ॥ २१६ ॥

विषदोपहरं शीतं सकपायं रसायनम् ।
स्फाटिकन्तु रसं शीतं चक्षुष्यं स्वादु लेखनम् ॥ २१७ ॥

पद्मरागाह्वयं मुक्तां विद्रुमञ्च हरिन्मणिम् ।
पुष्यरागं तथा वज्रमिन्द्रनीलाभिधं पुनः ॥ २१८ ॥

गोमेदकाख्यं वैडूर्यं नव रत्नानि निर्दिशेत् ।
स्वादूनि सकषायाणि चक्षुष्याणि सराणि च ॥ २१९ ॥

विलेखनानि शीतानि पापालक्ष्मीहराणि च ।
विष्णुक्रान्ती च वाराही देवी भृंगी शशश्रुतिः ॥ २२० ॥

दूर्वेन्द्रवल्ली लक्ष्मीश्च भद्रा स्पर्शासहेत्यमूः ।
दशपुष्पाभिधानास्स्युः पापालक्ष्मीहराः शुभाः ॥ २२१ ॥

बालग्रहहरा व्रण्यास्त्रिदोषोत्थज्वरापहाः ।
बिल्वकाश्मर्यतर्कारीपाटलाडुण्डुकैर्महत् ॥ २२२ ॥

जयेत् कषायतिक्तोष्णं पञ्चमूलं कफानिलौ ।
ह्रस्वं बृहत्यंशुमतीद्वयगोक्षुरकैः स्मृतम् ॥ २२३ ॥

स्वादुपाकरसं नातिशीतोष्णं सर्वदोषजित् ।
एताभ्यां दशमूलं स्याद्दोषत्रयविनाशनम् ॥ २२४ ॥

बलापुनर्नवैरण्डसूर्प्यपर्णीद्वयेन च ।
मध्यमं कफवातघ्नं नातिपित्तकरं सरम् ॥ २२५ ॥

अभीरुवीराजीवन्तीजीवकर्षभकैः स्मृतम् ।
जीवनाख्यन्तु चक्षुष्यं वृष्यं पित्तानिलापहम् ॥ २२६ ॥

तृणाख्यं पित्तजिद्दर्भकासेक्षुशरशालिभिः ।
एतानि पञ्चमूलानि पञ्च घ्नन्ति त्रिदोषजान् ॥ २२७ ॥

हिध्माकासज्वरश्वासक्षयादीन् बृंहणानि च ।
तीक्ष्णपत्रघटाम्लाम्लवेतसाम्लद्रुमाम्रकैः ॥ २२८ ॥

पञ्चाम्लमुदितं वातशोफोदरविनाशनम् ।
मरिचं नागरं कृष्णा स्मृतं त्रिकटु तज्जयेत् ॥ २२९ ॥



स्थौल्याग्निसदनश्वासकासश्लीपदपीनसान् ।
चविकापिप्पलीमूलपिप्पलीचित्रकौषधैः ॥ २३० ॥

पञ्चकोलं दीप्तिकरं पीनसोदरगुल्मजित् ।
सैन्धवं षट्पलं तद्वद्वातश्लेष्मज्वरापहम् ॥ २३१ ॥

त्वक्पत्रैलं त्रिजातं स्यात् चतुर्जातं सकेसरम् ।
पित्तप्रकोपि तीक्ष्णोष्णं रूक्षं दीपनरोचनम् ॥ २३२ ॥

शशाङ्करेखा धान्याकं विळङ्गं कौटचं फलम् ।
एला ज्योतिष्मती षट्कं तण्डुलानां त्रिदोषहृत् ॥ २३३ ॥

एवं बहूपयोगानामौषधानां गुणैस्सह ।
दिङ्मात्रमत्र गदितं तत्र तत्र च वक्ष्यते ॥ २३४ ॥

एकैकशश्च रोगघ्नाः केचिदन्ये तु यौगिकाः ।
अगदास्तत्प्रपञ्चोऽत्र ग्रन्थभीत्या न लिख्यते ॥ २३५ ॥

भस्मादिपरिणामेन कुर्युरभ्रादयो गुणान् ।
द्रव्यैर्गुणैः क्रियाभिश्च वीक्ष्य कार्याणि धीमता ॥ २३६ ॥

प्रविभज्य यथादोषं प्रयोज्यं रोगशान्तये ।
रसाः स्वाद्वम्ललवणतिक्तोषणकषायकाः ॥ २३७ ॥

तत्राद्या मारुतं घ्नन्ति त्रयस्तिक्तादयः कफम् ।
कषायतिक्तमधुराः पित्तमन्ये तु कुर्वते ॥ २३८ ॥

शीतं भवति पित्तघ्नमुष्णं वातकफापहम् ।
व्यायामाद्याः क्रियाश्च स्युर्दोषघ्न्यो युक्तिसेविताः ॥ २३९ ॥

किन्तूदरादौ कल्प्यन्ते विषाद्याः प्राणरक्षकाः ।
अतोऽत्र युक्तियुक्तस्य सर्वमप्यौषधं भवेत् ॥ २४० ॥

शास्त्रप्रसिद्धिगुरुवाक्यबहुप्रयोगैः
सिद्धान्यनेकगुणवन्ति महौषधानि ।

एकैकशोऽत्र बहुभिर्मिलितानि वापि
सात्म्यादि साधु परिमृश्य भिषक् प्रयुञ्ज्यात् ॥ २४१ ॥

इत्यौषधकल्पो नाम
तृतीयोऽध्यायः ।

---

# चतुर्थोऽध्यायः ।

---

## आहारकल्पः ।

---

॥ अथात आहारकल्पं व्याख्यास्यामः ॥

वेगान्न धारयेद्वातविण्मूत्रक्षवतृट्क्षुधाम् ।
निद्राकासश्रमश्वासजृंभाश्रुच्छर्दिरेतसाम् ॥ १ ॥
विण्मूत्राधोमरुद्रोधे गुल्मोदावर्तरुक्क्लमाः ।
वातमूत्रशकृत्संगप्रमुखा विविधा रुजः ॥ २ ॥
निद्रारोधे मूर्धनेत्रगौरवालस्यजृंभिकाः ।
शुक्रे धृते तत्स्रवणं गुह्यरुक् श्वयथुर्ज्वरः ॥ ३ ॥
धृतेष्वन्येषु हृद्रोगमन्यास्तंभारुचिभ्रमाः ।
शिरोर्तीन्द्रियदौर्बल्यप्रमुखाः प्रायशो गदाः ॥ ४ ॥
प्रायेण वातकोपः स्यात् बहुधा वेगधारिणः ।
तस्यानुलोमनं कुर्यादतोऽन्तर्बहिरौषधम् ॥ ५ ॥
विड्रोधे मलविस्रंसं सुखनिद्राञ्च तत्क्षये ।
स्त्रीसेवां शुक्ररोधे तु गुल्मारुच्यादिके पुनः ॥ ६ ॥



सेवेत वक्ष्यमाणं च यथायोग्यं चिकित्सितम् ।
धारयेत्तु सदा वेगान् हितैषी प्रेत्य चेह च ॥ ७ ॥
लोभेर्ष्याद्वेषमात्सर्यरागादीनां जितेन्द्रियः ।
धीधैर्यात्मादिविज्ञानं मनोदोषौषधं परम् ॥ ८ ॥
अदस्त्वन्नानि वक्ष्यन्ते प्रसिद्धानीह कानिचित् ।
मण्डपेयाविलेपीनामोदनस्य च लाघवम् ॥ ९ ॥
यथापूर्वं नवस्तत्र मण्डो वातानुलोमनः ।
तृड्ग्लानिदोषशेषघ्नः पाचनो धातुसाम्यकृत् ॥ १० ॥
स्रोतोमार्दवकृत्स्वेदी सन्धुक्षयति चानलम् ।
क्षुत्तृष्णाग्लानिदौर्बल्यकुक्षिरोगज्वरापहा ॥ ११ ॥
मलानुलोमनी पथ्या पेया दीपनपाचनी ।
विलेपी ग्राहिणी हृद्या तृष्णाघ्नी दीपनी हिता ॥ १२ ॥
व्रणाक्षिरोगसंशुद्धदुर्बलस्नेहपायिनाम् ।
ओदनस्तु लघुः पथ्यः पक्वातीसारकासयोः ॥ १३ ॥
कफरोगेषु चान्यस्स्यात् देहदार्ढ्यबलप्रदः ।
आग्नेयौषधसिद्धश्च सुलघुर्भृष्टतण्डुलः ॥ १४ ॥
सुगुरुश्च भवेत् क्षीरमांसादिकाथसाधितः ।
इति द्रव्यक्रियायोगमानाद्यैस्सर्वमादिशेत् ॥ १५ ॥
लाजास्तृट्च्छर्द्यतीसारमेहमेदःकफच्छिदः ।
कासपित्तप्रशमना दीपना लघवो हिमाः ॥ १६ ॥
पृथुका गुरवो बल्याः कफविष्टंभकारिणः ।
धाना विष्टंभिनी रूक्षा तर्पणी लेखनी गुरुः ॥ १७ ॥
सक्तवो लघवः क्षुत्तृट्श्रमनेत्रामयव्रणान् ।
घ्नन्ति सन्तर्पणाः पानात् सद्य एव बलप्रदाः ॥ १८ ॥

न केवलान् निशायां च सक्तूनद्यान्न वा बहून् ।
गुरवो बृंहणा वृष्या मोदकास्स्युस्सुदुर्जराः ॥ १९ ॥

बृंहणः प्रीणनो वृष्यश्चक्षुष्यो व्रणहा रसः ।
मौद्गस्तु पथ्यस्संशुद्धव्रणकर्णाक्षिरोगिणाम् ॥ २० ॥

वातानुलोमी कौलत्थो गुल्मतूनिप्रतूनिजित् ।
प्रभूताभ्यन्तरमलो माषसूपः परं स्मृतः ॥ २१ ॥

पिण्याको ग्लपनो रूक्षो विष्टंभी दृष्टिदूषणः ।
सूपापूपादिकानेवं द्रव्यं स्मृत्वा दिशेद् गुणान् ॥ २२ ॥

न सर्वाण्यन्नरूपाणि कथ्यन्ते ग्रन्थगौरवात् ।
कुकूलकर्परभ्राष्ट्रकन्दुंगारविपाचितान् ॥ २३ ॥

एकयोनीन् लघून् विद्याद्दूपानुत्तरोत्तरम् ।
हरिण्याद्या मृगाः प्रोक्ता ये भक्ष्यं मृगयन्ति हि ॥ २४ ॥

बालाद्यो विष्किराः स्युः पद्भ्यां विक्षिप्य भक्षणात् ।
प्रतुदाः स्युः कपोताद्याश्चञ्च्वा सन्तुद्य भक्षणात् ॥ २५ ॥

विलेशयाः स्युर्गोधाद्या भूवृक्षविवराश्रयात् ।
गवाद्याः प्रसहाः प्रोक्ताः प्रसह्याशनशीलतः ॥ २६ ॥

महामृगा वराहाद्या बलगर्वादितः स्मृताः ।
सारसाद्या जलचराः स्युर्जलोपरिवर्तनात् ॥ २७ ॥

रोहितप्रमुखा मत्स्यसंज्ञाः स्युर्ये जलोद्भवाः ।
एवमष्टविधं मांसमेषामाहुस्समासतः ॥ २८ ॥

आद्यान्त्या जाङ्गलानूपा मध्यौ साधारणौ स्मृतौ ।
तत्र बद्धमलाः शीता लघवो जाङ्गला हिताः ॥ २९ ॥

पित्तोत्तरे वातमध्ये सन्निपाते कफानुगे ।
दीपनः कटुकः पाके ग्राही रूक्षो हिमः शशः ॥ ३० ॥



नातिपथ्यश्शिखी पथ्यश्श्रोत्रस्वरवयोदृशाम् ।
तद्वच्च कुक्कुटो वृष्यो ग्राम्यस्तु श्लेष्मळो गुरुः ॥ ३१ ॥

नाऽतिशीतगुरुस्निग्धं मांसमाजमदोषळम् ।
उष्णो गरीयान्महिषः स्वप्नदार्ढ्यबृहत्त्वकृत् ॥ ३२ ॥

तद्वद्वराहश्श्रमहा रुचिपित्तकफप्रदः ।
मत्स्याः परं कफकराश्चिलिचीमस्त्रिदोषकृत् ॥ ३३ ॥

मांसं सद्योहतं शुद्धं वयस्थञ्च भजेत्त्यजेत् ।
स्वयं मृतं कृशं पूति व्याधिवारिविषैर्हतम् ॥ ३४ ॥

ओदनो विषवान् सान्द्रो भवेत् पर्युषितोपमः ।
मयूरकण्ठतुल्योष्मा गन्धवर्णादिवर्जितः ॥ ३५ ॥

व्यञ्जनान्याशु शुष्यन्ति श्यावक्षोभानि तत्र च ।
हीनातिरिक्ता विकृता छाया दृश्येत नैव वा ॥ ३६ ॥

पाकः फलानामामानां पक्वानां परिकोथनम् ।
मृदूनां कठिनानां च भवेत् स्पर्शविपर्ययः ॥ ३७ ॥

आर्द्रेषु तत्तद्द्रव्येषु रेखाः स्युर्भिन्नवर्णकाः ।
असेव्यता मक्षिकादेर्मोहवैराग्यदायिता ॥ ३८ ॥

गन्धवर्णाद्यन्यथात्वं प्रायस्सविषलक्षणम् ।
इत्यन्नं सविषं ज्ञात्वा त्यजेदाशु विचक्षणः ॥ ३९ ॥

स्पृष्टे तु कण्डूदाहोषाज्वरार्तिस्फोटसुप्तयः ।
नखरोमच्युतिश्शोफसेकाद्या विषनाशनाः ॥ ४० ॥

शस्तास्तत्र प्रलेपाश्च सेव्यचन्दनपद्मकैः ।
ससोमवल्कतालीसपत्रकुष्ठामृतानतैः ॥ ४१ ॥

भुक्ते तु स्वेदरोमाञ्चमूर्छाध्मानभ्रमादयः
आमाशयस्थे तु वमिश्चक्षुर्हृदयरोधनम् ॥ ४२ ॥

पक्वाशये नैकवर्णं मूत्रातीसारसंभवः ।
तयोर्वान्तविरिक्तस्य हरिद्रे कटभींगुदम् ॥ ४३ ॥

सिन्दुवारकनिष्पाववाष्पिकाशतपर्विकाः ।
तण्डुलीयकमूलानि कुक्कुटाण्डमवल्गुजम् ॥ ४४ ॥

नावनाञ्जनपानेषु योजयेद्विषशान्तये ।
विषपीताय दद्याच्च सूक्ष्मं ताम्ररजस्ततः ॥ ४५ ॥

सक्षौद्रं हृद्विशुध्यर्थं शाणं स्वर्णरजस्ततः ।
न सज्जेद्धेमपस्यांगे पद्मपत्रेऽम्बुवद्विषम् ॥ ४६ ॥

क्रियां विषोक्तां कुर्याच्च गरेऽप्येष विधिः स्मृतः ।
विरुद्धमपि चाहारं विद्याद्गरविषोपमम् ॥ ४७ ॥

विरुद्धमम्लं पयसा माषाद्यैर्लैकुचं फलम् ।
फलं कदल्यास्तक्रेण दध्ना तालफलेन वा ॥ ४८ ॥

मधुसर्पिर्वसातैलपानीयानि द्विशस्त्रिशः ।
एकत्र वा समांशानि विरुध्यन्ते परस्परम् ॥ ४९ ॥

भिन्नांशे अपि मध्वाज्ये दिव्यवार्यनुपानतः ।
वराहवसया भृष्टा बलाका हन्त्यसून् क्षणात् ॥ ५० ॥

इत्यादिका बहुविधा विरुद्धास्सन्त्यनिष्टदाः ।
यत्किञ्चिद्दोषमुत्क्लेश्य न हरेत्तत्समासतः ॥ ५१ ॥

विरुद्धं शुद्धिरत्रेष्टा शमो वा तद्विरोधिभिः ।
व्यायामस्निग्धदीप्ताग्निवयस्थबलशालिनाम् ॥ ५२ ॥

विरोध्यपि न पीडायै सात्म्यमल्पञ्च भोजनम् ।
पादेनापथ्यमभ्यस्तं त्यजेत्सेवेत वा हितम् ॥ ५३ ॥

असात्म्यजा हि रोगास्स्युस्सहसा त्यागशीलनात् ।
क्रमेणोपचिता दोषाः क्रमेणापचिता गुणाः ॥ ५४ ॥



प्राप्नुवन्त्यपुनर्भावमप्रकम्प्या भवन्ति च ।
आहारशयनब्रह्मचर्यैर्युक्त्या निषेवितैः ॥ ५५ ॥

शरीरं धार्यते नित्यमगारमिव धारणैः ।
शुद्धे मूत्रमलाधारे शुद्धोद्गारे क्षुदुद्भवे ॥ ५६ ॥

स्वच्छे हृदि लघौ देहे दोषे स्वस्थेऽशनं हितम् ।
मात्राशी सर्वकालं स्यान्मात्रा ह्यग्नेः प्रवर्तिका ॥ ५७ ॥

जीर्येद्यावत्सुखं यस्य सा मात्रा तस्य कीर्तिता ।
गुरूणामर्धसौहित्यं लघूनां नातितृप्तिता ॥ ५८ ॥

अन्नेन कुक्षेर्द्वावंशौ पानेनैकं प्रपूरयेत् ।
आश्रयं पवनादीनां चतुर्थमवशेषयेत् ॥ ५९ ॥

अथान्नमिष्टोपहृतमिष्टमिष्टजनैस्सह ।
षष्टिकादिकृतं मृष्टमश्नीयात्तुष्टिपुष्टिदम् ॥ ६० ॥

षड्रसं मधुरप्रायं सात्म्यं स्निग्धोष्णमादरात् ।
गुरुस्निग्धयुतं पूर्वं मध्येऽम्ललवणोत्कटम् ॥ ६१ ॥

लघुरूक्षोत्तरं चान्ते कृतकृत्यो हितं मतम् ।
समस्थूलकृशा भुक्तमध्यान्तप्रथमांबुपाः ॥ ६२ ॥

अनुपानं हिमं [illegible]रे यवगोधूमयोर्हितम् ।
दध्नि मद्ये विषे क्षौद्रे कोष्णं पिष्टमयेषु तु ॥ ६३ ॥

शाकमुद्गादिविकृतौ मस्तुतक्राम्लकाञ्जिकम् ।
व्याध्यौषधाध्वभाष्यस्त्रीलंघनातपकर्मभिः ॥ ६४ ॥

क्षीणे बाले च वृद्धे च पयः पथ्यं यथामृतम् ।
पयस्सुरा वा पुष्ट्यर्थं कर्शनार्थं मधूदकम् ॥ ६५ ॥

विपरीतं यदन्नस्य गुणैः स्यादविरोधि च ।
अनुपानं समासेन सर्वदा तत् प्रशस्यते ॥ ६६ ॥

अनुपानं करोत्यूर्जां तृप्तिं व्याप्तिं दृढांगताम् ।
अन्नसंघातशैथिल्यविक्लेदजरणानि च ॥ ६७ ॥

नोर्ध्वजत्रुगदश्वासकासोरःक्षतपीनसे ।
अतिमात्रं पुनस्सर्वानाशु दोषान् प्रकोपयेत् ॥ ६८ ॥

पीड्यमाना हि वाताद्या युगपत्तेन कोपिताः ।
आमेनान्नेन दुष्टेन तदेवाविश्य कुर्वते ॥ ६९ ॥

विष्टंभयन्तोऽलसकं च्यावयन्तो विषूचिकाम् ।
अधरोत्तरमार्गाभ्यां सहसा वाजितात्मनाम् ॥ ७० ॥

पीडितं मारुतेनान्नं श्लेष्मणा रुद्धमन्तरा ।
शूलादीन् कुरुते तीव्रान् छर्द्यतीसारवार्जितान् ॥ ७१ ॥

सोऽलसोऽत्यर्थदुष्टास्तु दोषास्तिर्यग्गताः पुनः ।
स्तंभयन्त्याधिकं देहं त्याज्यो दण्डालसो हि सः ॥ ७२ ॥

अथाममलसीभूतं साध्यं त्वरितमुल्लिखेत् ।
पीत्वा सोग्रापटुफलं वार्युष्णं योजयेत्ततः ॥ ७३ ॥

स्वेदनं फलवर्तीश्च मलवातानुलोमनीम् ।
नाम्यमानानि चांगानि भृशं स्विन्नानि वेष्टयेत् ॥ ७४ ॥

तीव्रार्तिरपि नाजीर्णी पिबेच्छूलघ्नमौषधम् ।
अनग्निमातुरं हन्यादामदोषौषधः क्रमात् ॥ ७५ ॥

शुद्धे जीर्णे च भैषज्यं युञ्ज्यात् स्तब्धगुरूदरे ।
दोषशेषस्य पाकार्थमग्नेस्सन्धुक्षणाय च ॥ ७६ ॥

विरुद्धाध्यशनाजीर्णशीलिनो विषलक्षणः ।
आमदोषो महाघोरो विषूच्यादिकरो भवेत् ॥ ७७ ॥

विषूच्यां दीपनं दद्याद्वातश्लेष्महरञ्च यत् ।
पाननस्याञ्जने शस्तो विल्वादिर्विषकल्पितः ॥ ७८ ॥



पाणिपादोदरे तापः पोट्टल्या च प्रशस्यते ।
क्वाथं विल्वाजमोजाद्यं काळशाकादिकं पिबेत् ॥ ७९ ॥

पिपासायां दुस्सहायां माक्षिकव्योपसंयुतम् ।
नाळिकेरोदकं दद्याल्लाजविल्वकृतांबु वा ॥ ८० ॥

विषूच्यामतिवृद्धायां पार्ष्ण्योर्दाहो विधीयते ।
यः श्यावदन्तोष्ठनखो रक्तान्तर्गतलोचनः ॥ ८१ ॥

क्षामस्वरस्तब्धतनुः स्रस्तसन्धिश्च तं त्यजेत् ।
निद्रया स्युस्सुखश्चायुः पुष्टिर्ज्ञानं बलोद्यमौ ॥ ८२ ॥

तेषां विपर्ययं दद्यात् हीना चाकालजा च सा ।
रात्रौ जागरणं रूक्षं स्निग्धं प्रस्वपनं दिवा ॥ ८३ ॥

ग्रीष्मे वायुचयादानरौक्ष्यरात्र्यल्पभावतः ।
दिवास्वप्नो हितोऽन्यस्मिन् कफपित्तकरो हि सः ॥ ८४ ॥

वृद्धबालाबलक्षीणक्षततृट्च्छूलरोगिणाम् ।
अजीर्णाभिहतोन्मत्तहिध्माश्वासातिसारिणाम् ॥ ८५ ॥

दिवास्वप्नोचितानां च तन्निषेधो न युज्यते ।
बहुमेदःकफास्स्वप्युः स्नेहनित्याश्च नाहनि ॥ ८६ ॥

विषार्तः कण्ठरोगी च नैव जातु निशास्वपि ।
योजयेदतिनिद्रायां तीक्ष्णं प्रच्छर्दनाञ्जनम् ॥ ८७ ॥

चिन्ताव्यवायादि तथा यच्चान्यत् कफनाशनम् ।
शीलयेन्मन्दनिद्रस्तु क्षीरमद्यरसान् दधि ॥ ८८ ॥

अभ्यंगोद्वर्तनस्नानमूर्धकर्णाक्षितर्पणम् ।
वातघ्नं कफकृच्चान्यद्विषयं मनसः प्रियम् ॥ ८९ ॥

असात्म्यजागरादर्धं प्रातस्स्वप्यादभुक्तवान् ।
ब्रह्मचर्यरतेर्ग्राम्यसुखनिस्पृहचेतसः ॥ ९० ॥

निद्रा सन्तोषतृप्तस्य स्वं कालं नातिवर्तते ।
ग्राम्यधर्मे त्यजेन्नारीं दुष्टसङ्कीर्णमेहनाम् ॥ ९१ ॥

अनुत्तानामप्रियाश्च देवगुर्वादिमन्दिरम् ।
अकालमन्यवेगार्तः कुर्यान्नाप्याशितोऽपि तम् ॥ ९२ ॥

सेवेत कामतः कामं तृप्तो वाजीकृतां हिमे ।
त्र्यहाद्वसन्तशरदोः पक्षाद्वृष्टिनिदाघयोः ॥ ९३ ॥

भ्रमक्लमोरुदौर्बल्यं बलधात्विन्द्रियक्षयः ।
अकालमरणञ्च स्यादन्यथा गच्छतः स्त्रियम् ॥ ९४ ॥

जीवनीयौषधक्षीरतर्पणं तस्य भेषजम् ।
स्मृतिमेधायुरारोग्यपुष्टीन्द्रिययशोबलैः ॥ ९५ ॥

अधिका मन्दजरसो भवन्ति स्त्रीषु संयताः ।
सुरते विरते स्नानं चन्दनाद्यनुलेपनम् ॥ ९६ ॥

सुराक्षीरादिपानञ्च कृत्वा स्वप्याद्यथासुखम् ।

सम्यङ्निराकृतशरीरमनोमलस्य
काले कृतोचितमितात्महिताशनस्य ।
निद्राविधिं निधुवनं भजतो यथोक्तं
बुद्धेर्बलं सुभगता च भवेच्चिरायुः ॥ ९७ ॥

इति आहारकल्पो नाम
चतुर्थोऽध्यायः

---



# पञ्चमोऽध्यायः ।

---

## रसादिकल्पः ।

---

॥ अथातो रसादिकल्पं व्याख्यास्यामः ॥

रसाद्विपाकाद्वीर्याच्च प्रभावाच्च चतुर्विधा ।
द्रव्येषु कथ्यते शक्तिः बलवत्युत्तरोत्तरम् ॥ १ ॥

पञ्चभूतात्मकं द्रव्यं तेषां न्यूनातिरेकता ।
नानार्थकारिताहेतुर्व्यपदेशस्तु भूयसा ॥ २ ॥

सम्मिश्रेऽपि रसे तत्र जिह्वाग्राह्यः स्फुटो रसः ।
अस्फुटोऽनुरसः प्रोक्तस्तयोर्भिश्रस्त्वनेकधा ॥ ३ ॥

जाठरेणाग्निना पाके रसानां परिणामतः ।
यो रसोऽन्यो विपाकस्स रसेभ्योऽपि बलाधिकः ॥ ४ ॥

स्वाद्वम्लकटुरूपेण विपाकस्त्रिविधो मतः ।
स्वादुः पटुश्च मधुरमम्लोऽम्लं पच्यते रसः ॥ ५ ॥

तिक्तोषणकषायाणां विपाकः प्रायशः कटुः ।
शीतमुष्णमिति द्वेधा परत्वाद्वीर्यमिष्यते ॥ ६ ॥

गुरुमन्दहिमस्निग्धश्लक्ष्णसान्द्रमृदुस्थिरान् ।
सस्थूलपिच्छिलान् प्राहुर्गुणान् शैत्यकरान् दश ॥ ७ ॥

लघुतीक्ष्णोष्णरूक्षत्वपरुषद्रवसंयुतान् ।
काठिन्यरससूक्ष्मत्वविशदान्युष्णकार्यदान् ॥ ८ ॥

रसादिसाम्ये यत्कर्म विशिष्टं तत् प्रभावजम् ।
दन्ती रसाद्यैस्तुल्यापि चित्रकस्य विरेचनी ॥ ९ ॥

मधुकस्य च मृद्वीका घृतं क्षीरस्य दीपनम् ।
किञ्चिद्रसेन कुरुते कर्म पाकेन चापरम् ॥ १० ॥

गुणान्तरेण वीर्येण प्रभावेणैव किञ्चन ।
कुरुते जन्मतः सात्म्यात् स्वादुर्धातुष्वलं बलम् ॥ ११ ॥

बालवृद्धक्षतक्षीणवर्णकेशेन्द्रियौजसाम् ।
प्रशस्तो बृंहणः कण्ठ्यः स्तन्यसन्धानकृद्गुरुः ॥ १२ ॥

आयुष्यो जीवनः स्निग्धः पित्तानिलविषापहः ।
कुरुतेऽत्युपयोगेन स मेदःश्लेष्मजान् गदान् ॥ १३ ॥

स्थौल्याग्निसादसन्न्यासमेहगण्डार्बुदादिकान् ।
अम्लोऽग्निदीप्तिकृत् स्निग्धो हृद्यः पाचनरोचनः ॥ १४ ॥

उष्णवीर्यो हिमस्पर्शः प्रीणनः क्लेदनो लघुः ।
करोति कफपित्तास्रं मूढवातानुलोमनः ॥ १५ ॥

सोऽत्यभ्यस्तस्तनोः कुर्याच्छैथिल्यं तिमिरं भ्रमम् ।
कण्डूपाण्डुत्ववीसर्पशोफविस्फोटतृड्ज्वरान् ॥ १६ ॥

लवणः स्तम्भसंघातबन्धविध्मापनोऽग्निकृत् ।
स्नेहनः स्वेदनस्तीक्ष्णो रोचनः छेदभेदकृत् ॥ १७ ॥

सोऽतियुक्तोऽस्रपवनं खलतिं पलितं वलिम् ।
तृट्कुष्ठविषवीसर्प जनयेत् क्षपयेत् बलम् ॥ १८ ॥

तिक्तः स्वयमरोचिष्णुररुचिक्रिमितृड्विषान् ।
कुष्ठमूर्छाज्वरोत्क्लेददाहपित्तकफान् जयेत् ॥ १९ ॥

क्लेदमेदोवसामज्जशकृन्मूत्रोपशोषणः ।
लघुर्मेध्यो हिमो रूक्षः स्तन्यः कण्ठविशोधनः । ॥ २० ॥



धातुक्षयं चलव्याधीनतियोगात् करोति सः ।
कटुर्गळामयोदर्दकुष्ठालसकशोफजित् ॥ २१ ॥

व्रणावसादनः स्नेहमेदःक्लेदोपशोषणः ।
दीपनः पाचनो रुच्यः शोधनोऽन्यस्य रूक्षणः ॥ २२ ॥

भिनत्ति बन्धान् स्रोतांसि विवृणोति कफापहः ।
कुरुते सोऽतियोगेन तृष्णां शुक्रबलक्षयम् ॥ २३ ॥

मूर्छामाकुञ्चनं कम्पं कटिपृष्ठादिषु व्यथाम् ।
कषायः पित्तकफहा गुरुरस्रविशोधनः ॥ २४ ॥

पीडनो रोपणश्शीतक्लेदमेदोविशोषणः ।
आमसंस्तम्भनो ग्राही रूक्षोऽतित्वक्प्रसादनः ॥ २५ ॥

करोति शीलितस्सोति विष्टंभाध्मानहृद्रुजः ।
तृट्कार्श्यपौरुषभ्रंशस्रोतोबन्धमलग्रहान् ॥ २६ ॥

मधुरं श्लेष्मळं प्रायो जीर्णाच्छालियवादृते ।
मुद्गाद् गोधूमतः क्षौद्रात् सिताया जाङ्गलामिषात् ॥ २७ ॥

प्रायोऽम्लं पित्तजननं डाडिमामलकादृते ।
अपथ्यं लवणं प्रायश्चक्षुषोऽन्यत्र सैन्धवात् ॥ २८ ॥

तिक्तं कटु च भूयिष्ठमवृष्यं वातकोपनम् ।
ऋतेऽमृतापटोलीभ्यां शुण्ठीकृष्णारसोनतः ॥ २९ ॥

कषायः प्रायशः शीतस्स्तंभनश्चाभयां विना ।
रसाः कट्वम्ललवणा वीर्येणोष्णा यथोत्तरम् ॥ ३० ॥

तिक्तः कषायो मधुरस्तद्वदेव च शीतळाः ।
तिक्तः कटुः कषायश्च रूक्षा बद्धमलास्तथा . ॥ ३१ ॥

पट्वम्लमधुराः स्निग्धास्सृष्टविण्मूत्रमारुताः ।
पटोः कषायस्तस्माच्च मधुरः परमं गुरुः ॥ ३२ ॥

लघुरम्लः कटुस्तस्मात्तस्मादपि च तिक्तकः ।
घृतहेमगुळाक्षोळामोचतालपरूषकम् ॥ ३३ ॥

अभीरुवीरापनसराजादनबलात्रयम् ।
मेदे चतस्रः पर्णिन्यो जीवन्ती जीवकर्षभम् ॥ ३४ ॥

मधूकं मधुकं विंबी विदारी श्रावणीयुगम् ।
क्षीरशुक्ला तुकाक्षीरी क्षीरिण्यः काश्मरीसहे ॥ ३५ ॥

क्षीरेक्षुगोक्षुरक्षौद्रद्राक्षादिर्मधुरो गणः ।
अम्लो धात्रीफलाम्लीकामातुलुंगाम्लवेतसम् ॥ ३६ ॥

डाडिमं रजतं तक्रं शुक्तं पारावतं दधि ।
आम्रमाम्रातकं भव्यं कपित्थं करमर्दकम् ॥ ३७ ॥

वरं सौवर्चलं कृष्णां विळं सामुद्रमौद्भिदम् ।
रोमकं पांसुजं सीसं क्षारश्च लवणो गणः ॥ ३८ ॥

तिक्तः पटोली त्रायन्ती वाळकोशीरचन्दनम् ।
भूनिंबनिंबकटुकातगरागरुवत्सकम् ॥ ३९ ॥

नक्तमालं द्विरजनी मुस्ता मूर्वाटरूषकम् ।
पाठापामार्गकंसायोगुळूचीधन्वयापकम् ॥ ४० ॥

पञ्चमूलं महद्व्याघ्र्यौ विशालातिविषा वचा ।
कटुको हिंगुमरिचक्रमिजित्पञ्चकोलकम् ॥ ४१ ॥

कुठेराद्या हरितकं पित्तं मूत्रमरुष्करम् ।
वर्गः कषायः पथ्याक्षः शिरीषः खदिरो मधु ॥ ४२ ॥

कदंबोदुंबरं मुक्ता प्रवाळाञ्जनगैरिकम् ।
बालं कपित्थं खर्जूरं विसं पद्मोत्पलादि च ॥ ४३ ॥

द्रव्यप्रभेदेषु रसं विपाकं
वीर्यं प्रभावं परिसृश्य साधु ।



समाहितात्मा विधिवत् प्रयुञ्ज्यात
भिषक् पृथिव्यामुपयाति कीर्तिम् ॥ ४४ ॥

इति रसादिनिरूपणकल्पो नाम
पञ्चमोऽध्यायः ।

---

# षष्ठोऽध्यायः ।

---

## गर्भोपचारकल्पः ।

---

॥ अथातो गर्भोपचारकल्पं व्याख्यास्यामः ॥

शुद्धे शुक्लार्तवे सत्त्वः स्वकर्मक्लेशचोदितः ।
गर्भः सम्पद्यते युक्तिवशादग्निरिवारणौ ॥ १ ॥

बीजात्मकैर्महाभूतैः सूक्ष्मैस्सत्वानुगैश्च सः ।
मातुश्चाहाररसजैः क्रमात् कुक्षौ विवर्धते ॥ २ ॥

कार्येषु कारणगुणा दृश्यन्ते प्रायशो भुवि ।
नानायोन्याकृतीस्सत्वो धत्तेऽतो द्रुतलोहवत् ॥ ३ ॥

अत एव च शुक्लस्य बाहुल्याज्जायते पुमान् ।
रक्तस्य स्त्री तयोस्साम्ये क्लीवश्शुक्लार्तवे पुनः ॥ ४ ॥

वायुना बहुशो भिन्ने यथास्वं बह्वपत्यता ।
वियोनिविकृताकारा जायन्ते विकृतैर्मलैः ॥ ५ ॥

मासि मासि रजः स्त्रीणां रसजं स्रवति त्र्यहम् ।
वत्सरात् द्वादशादूर्ध्वं याति पञ्चाशतः क्षयम् ॥ ६ ॥

शुद्धे गर्भाशये मार्गे रक्ते शुक्रेऽनिले हृदि ।
पूर्णषोडशवर्षा स्त्री पूर्णविंशेन संगता ॥ ७ ॥

वीर्यवन्तं सुतं सूते तयोर्न्यूनाब्दयोः पुनः ।
रोग्यल्पायुरधन्यो वा गर्भो भवति नैव वा ॥ ८ ॥

वातादिदुष्टं रेतोऽस्त्रं न प्रजोत्पत्तिकारणम् ।
वातपित्तकफाक्रान्तं वदेल्लिंगैस्तदाश्रितैः ॥ ९ ॥

रक्तेन कुणपं वातश्लेष्मभ्यां ग्रन्थिसन्निभम् ।
पूयाभं कफपित्ताभ्यां क्षीणं मारुतपित्ततः ॥ १० ॥

कृच्छ्राण्येतान्यसाध्यन्तु त्रिदोषं मूत्रविट्प्रभम् ।
कुर्याद्वातादिभिर्दुष्टे सौषधं कुणपे पुनः ॥ ११ ॥

धातकीपुष्पखदिरडाडिमार्जुनसाधितम् ।
पाययेत्सर्पिरथवा विपकमसनादिभिः ॥ १२ ॥

पलाशभस्माश्मभिद्भ्यां ग्रन्थ्याभे पूयरेतसि ।
परूषकवटादिभ्यां क्षीणे शुक्रकरी क्रिया ॥ १३ ॥

संशुद्धो विट्प्रभे सर्पिर्हिंगुसेव्यादिसाधितम् ।
पिबेत् ग्रन्थ्यार्तवे पाठाव्योषवृक्षकजञ्जलम् ॥ १४ ॥

पेयं कुणपपूयास्रे चन्दनं वक्ष्यते तु यत् ।
गुह्यरोगे च तत्सर्वं कार्यं सोत्तरवास्तिकम् ॥ १५ ॥

शुद्धं शुक्लं गुरु स्निग्धं मधुरं बहुळं बहु ।
घृतमाक्षिकतैलाभं सद्गर्भायार्तवं पुनः ॥ १६ ॥

लाक्षारसशशास्राभं धौतं यच्च विरज्यते ।
स्वादुवृष्यौषधैः स्निग्धं क्षीराज्यं शुक्रवर्धनम् ॥ १७ ॥



माषाणां विकृतिस्तैलं पित्तळं चार्तवर्धिदम् ।
ऋतौ व्यवायः क्रियतां विशुद्धाभ्यां प्रजाप्तये ॥ १८ ॥

पद्मस्संकोचमायाति दिनेऽतीते यथा तथा ।
ऋतावतीते योनिश्च शुक्लन्नातः प्रतीच्छति ॥ १९ ॥

ऋतुस्तु द्वादश निशाः पूर्वास्तिस्रोऽत्र निन्दिताः ।
स्वभावादल्पता युग्मास्वार्तवस्य निशासु यत् ॥ २० ॥

पुरुषो जायते तस्मादन्यासु स्याच्च कन्यका ।
अनल्पत्वेऽपि सङ्कोचादेकादश्यान्नपुंसकम् ॥ २१ ॥

भवेत्साधनसाम्येन तस्मात् सा चापि वर्ज्यते ।
इच्छेतां यादृशं पुत्रं चिन्तयेतां रतोद्यमे ॥ २२ ॥

तद्रूपस्थानचरितविधेयादीनि दम्पती ।
उत्ताना संयतांगी स्त्री बीजं धत्तेऽत्र लक्षणम् ॥ २३ ॥

शुक्लास्रानिस्रुतिः कुक्षौ तृप्तिस्फुरणगौरवम् ।
हृदयस्पन्दनं तन्द्रा तृड्ग्लानिर्लोमहर्षणम् ॥ २४ ॥

अव्यक्तः प्रथमे मासि सप्ताहात् कललं भवेत् ।
गर्भः पुंसवनान्यत्र पूर्वं व्यक्तेः प्रयोजयेत् ॥ २५ ॥

बली पुरुषकारो हि दैवमप्यतिवर्तते ।
पुष्ये पुरुषकं हैमं राजतं वाथवायसम् ॥ २६ ॥

कृत्वाग्निवर्णं निर्वाप्य क्षीरे तस्याञ्जलिं पिबेत् ।
गौरदण्डमपामार्गं जीवकर्षभसैर्यकान् ॥ २७ ॥

पिबेत् पुष्ये जले पिष्टानेकद्वित्रिसमस्तशः ।
क्षीरेण श्वेतबृहतीमूलं नासापुटे स्वयम् ॥ २८ ॥

पुत्रार्थं दक्षिणे सिञ्चेद्वामे दुहितृवाञ्छया ।
पयसा लक्ष्मणामूलं पुत्रोत्पादस्थितिप्रदम् ॥ २९ ॥

नासयास्येन वा पीतं वटशृङ्गाष्टकं तथा ।
नवनीतघृतक्षीरजीवनीयानि सा भजेत् ॥ ३० ॥

मृद्वभीष्टोपचारा स्यादुत्तानशयनं त्यजेत् ।
अत्यायासं भयं क्रोधं गर्भसंरक्षणाय च ॥ ३१ ॥

वातळैश्च भवेत् गर्भः कुब्जान्धजळवामनः ।
पित्तळैः खलतिः पिङ्गः श्वित्री पाण्डुः कफात्मभिः ॥ ३२ ॥

व्याधींश्चास्या मृदुसुखैरतीक्ष्णैरौषधैर्जयेत् ।
द्वितीये मासि कललाद्घनः पेश्यथवार्बुदम् ॥ ३३ ॥

पुंस्त्रीक्लीबाः क्रमात्तेभ्यस्तत्र व्यक्तस्य लक्षणम् ।
क्षामता गरिमा कुक्षेर्मूर्च्छाच्छर्दिररोचकः ॥ ३४ ॥

जृम्भा प्रसेकस्सदनं रोमराज्याः प्रकाशनम् ।
अम्लेष्टता स्तनौ पीनौ सस्तन्यौ कृष्णचूचुकौ ॥ ३५ ॥

पादशोफो विदाहश्च श्रद्धा वा विविधात्मकाः ।
मातृजं ह्यस्य हृदयं मातुश्च हृदयेन तत् ॥ ३६ ॥

संबद्धं तेन गर्भिण्या नेष्टं श्रद्धाविमाननम् ।
देयमप्यहितं तस्यै हितोपहितमल्पकम् ॥ ३७ ॥

श्रद्धाविघाताद्गर्भस्य विकृतिश्च्युतिरेव वा ।
व्यक्तीभवति मासेऽस्य तृतीये गात्रपञ्चकम् ॥ ३८ ॥

मूर्धा द्वे सक्थिनी बाहू सूक्ष्मांगान्यसुखं सुखम् ।
चतुर्थे व्यक्ततांगानां चेतनायाश्च पञ्चमे ॥ ३९ ॥

षष्ठे स्नायुसिरारोमबलवर्णनखत्वचाम् ।
सर्वैस्सर्वांगसम्पूर्णो भावैः पुष्यति सप्तमे ॥ ४० ॥

तदा विदाहः कण्डूश्च गर्भिण्याः किक्किसानि वा ।
नवनीतं हितं तत्र कोलाम्लमधुरौषधैः ॥ ४१ ॥



सिद्धमल्पपटुस्नेहं लघु स्वादु च भोजनम् ।
चन्दनोशीरकल्केन लिम्पेदूरुस्तनोदरम् ॥ ४२ ॥

ओजोऽष्टमे सञ्चरति मातापुत्रौ मुहुः क्रमात् ।
तेन तौ म्लानमुदितौ तत्र जातो न जीवति ॥ ४३ ॥

शिशुरोजोनवस्थानान्नारी संशयिता भवेत् ।
क्षीरपेया च पेयात्र सघृतान्वासनं घृतम् ॥ ४४ ॥

मधुरैः साधितं शुद्ध्यै पुराणशकृतस्तथा ।
शुष्कमूलककोलाम्लकषायेण प्रशस्यते ॥ ४५ ॥

शताह्वाकल्कितो बस्तिस्सतैलघृतसैन्धवः ।
आरभ्य नवमान्मासाद्वर्षात् पूर्वमरोगदः ॥ ४६ ॥

सूतिस्ततो रोगकरः कुक्षौ वातावृताच्छिशोः ।
तत्र वातहराः सर्वाः क्रिया बाह्यान्तराश्रयाः ॥ ४७ ॥

प्रशस्ता नवमान्मासात् स्नेहोद्रिक्तोऽग्निकोदनः ।
सेकोऽभ्यंगश्चाप्रसूतेर्नित्यं वातहरैर्हिमैः ॥ ४८ ॥

मासः प्रसूतौ दशमः प्रशस्तश्च सुखावहः ।
अद्य श्वः प्रसवे ग्लानिः कुक्ष्यक्षिश्लथता क्लमः ॥ ४९ ॥

अधोगुरुत्वमरुचिः प्रसेको बहुमूत्रता ।
वेदनोरूदरकटीपृष्ठहृद्बस्तिवंक्षणे ॥ ५० ॥

योनिभेदरुजातोदस्फुरणस्रवणानि च ।
आवीनामनुजन्मातस्ततो गर्भोदकस्रुतिः ॥ ५१ ॥

अथोपस्थितगर्भां तां कृतकौतुकमंगळाम् ।
पाययेत्सघृतां पेयामभ्यक्तांगीं पुनः पुनः ॥ ५२ ॥

अधो नाभेर्विमृद्नीयात् कारयेज्जृंभचङ्क्रमम् ।
गर्भो गच्छन्नवागेवं बस्तेरुपरि तिष्ठति ॥ ५३ ॥

अथ खट्वाधिरूढायाः सुखं योनिं विकासयेत् ।
मृदुप्रवाहणपरां पुत्रं पश्येति हर्षयेत् ॥ ५४ ॥

अथ बालोपचारेण प्रजां जातामुपाचरेत् ।
गर्भसंगे तु तद्योनिं रामठेनाधिवासयेत् ॥ ५५ ॥

मुसलीं वा विशल्यां वा पाणिपादेन धारयेत् ।
जरास्वपतनेऽप्येवं बाह्वोरुत्क्षिप्य कम्पयेत् ॥ ५६ ॥

कटीमाकोटयेत् पार्ष्ण्या स्फिजौ गाढं निपीडयेत् ।
तालुकण्ठं स्पृशेद्वेण्या मूर्ध्नि दद्यात् स्नुहीपयः ॥ ५७ ॥

भूर्जलांगलिकीतुंबीसर्पत्वकुष्ठसर्षपैः ।
पृथग्द्वाभ्यां समस्तैर्वा योनिलेपनधूपनम् ॥ ५८ ॥

कुष्ठतालीसकल्कं वा सुरामण्डेन पाययेत् ।
यूषेण वा कुलत्थानां शाल्वजेनासवेन च ॥ ५९ ॥

शताह्वासर्षपाजाजीशिग्रुतीक्ष्णकचित्रकैः ।
साहिंगुकुष्ठमदनैः मूत्रे क्षीरे च सार्षपम् ॥ ६० ॥

तैलं सिद्धं हितं पायौ योन्यां वाप्यनुवासनम् ।
शतपुष्पावचाकुष्ठकणासर्षपकल्कितः ॥ ६१ ॥

निरूहः पातयत्याशु सस्नेहलवणोऽपराम् ।
तत्संगे ह्यनिलो हेतुस्सा निर्यात्याशु तज्जयात् ॥ ६२ ॥

कुशला पाणिनाक्तेन हरेत् क्लृप्तनखेन वा ।
मुक्तगर्भापरां योनिं तैलेनाभ्यज्य मर्दयेत् ॥ ६३ ॥

मर्कलाख्ये शिरोवस्तिकोष्ठशूले तु पाययेत् ।
सुचूर्णितं यवक्षारं घृतेनोष्णजलेन वा ॥ ६४ ॥

धान्यांबु वा गुळव्योषत्रिजातकरजोन्वितम् ।
सूता च वायुशान्त्यर्थं पञ्चकोलयुतं घृतम् ॥ ६५ ॥



तैलं वानुगुळांबूष्णं पिबेद्वा वातहृज्जलम् ।
त्र्यहादूर्ध्वं विदार्याद्यैः पेयां स्नानं सुखांभसा ॥ ६६ ॥

सप्तरात्रात् परश्चास्याः क्रमशो बृंहणं हितम् ।
यत्नेनोपचरेत्सूतां दुस्साधा हि तदामयाः ॥ ६७ ॥

मासद्वयात् त्रिमासाद्वा गतसूताभिधा भवेत् ।
गर्भव्यापदि कर्तव्यं क्रमादथ निगद्यते ॥ ६८ ॥

पुष्पे जाते तु गर्भिण्याः शूले वा स्निग्धशीतळम् ।
कार्यमन्तर्बहिः क्षीरीवल्कसेव्यहिमादिभिः ॥ ६९ ॥

साज्यैर्भृशार्द्रैश्च पिचून्योनौ वस्तौ च धारयेत् ।
शतधौतघृतालेपः क्षीर्याद्यंभोवगाहनम् ॥ ७० ॥

पिबेत् कान्ताब्जशालूकबालोदुंबरवत् पयः ।
गर्भे निपतिते तीक्ष्णं मद्यं सामर्थ्यतः पिबेत् ॥ ७१ ॥

मासतुल्यदिनान्येवं पेयादिः पतिते क्रमः ।
लघुरस्नेहलवणो दीपनीययुतो हितम् ॥ ७२ ॥

सञ्जातसारो यो गर्भो योनिस्रावादवृद्धिमान् ।
वर्तते सस्फुरः कोष्ठे तमाहुरुपविष्टकम् ॥ ७३ ॥

वातकोपात् कृशे गर्भे शुष्येन्नागोदरन्तु तत् ।
उदरं वृद्धमप्यत्र हीयते स्फुरणं चिरात् ॥ ७४ ॥

तयोर्बृंहणवातघ्नमधुरद्रव्यसंस्कृतैः ।
घृतक्षीररसैस्तृप्तिरामगर्भांश्च खादयेत् ॥ ७५ ॥

एवं पुष्टो भवेन्नो चेद्वर्षैर्जायेत नैव वा ।
उदावर्तन्तु गर्भिण्याः स्नेहैराशुतरं जयेत् ॥ ७६ ॥

योग्यैश्च वस्तिभिर्हन्यात्सगर्भां स हि गर्भिणीम् ।
गर्भे त्रिदोषोपचयादपथ्यैर्दैवतोऽपि वा । ॥ ७७ ॥

मृतेऽन्तरुदरं शीतं स्तब्धाध्मातं भृशव्यथम् ।
गर्भास्पन्दो भ्रमस्तृष्णा कृच्छ्रादुच्छ्वसनं क्लमः ॥ ७८ ॥
अरतिस्त्रस्तनेत्रत्वमावीनामसमुद्भवः ।
तस्याः कोष्णाम्बुसिक्तायाः पिष्ट्वा योनिं प्रलेपयेत् ॥ ७९ ॥
गुडं किण्वं सलवणं तथान्तः पूरयेन्मुहुः ।
घृतेन कल्कीकृतया शाल्मल्युदितपिच्छया ॥ ८० ॥
मन्त्रैर्योगैर्जरायूक्तैर्मूढगर्भो न चेत् पतेत् ।
अथापृच्छ्येश्वरं वैद्यो यत्नेनाशु तमाहरेत् ॥ ८१ ॥
हस्तमभ्यज्य योनिं च साज्यशाल्मलिपिच्छया ।
हस्तेन शक्यं तेनैव गात्रं च विषमास्थितम् ॥ ८२ ॥
आच्छनोत्पीडसंपीडविक्षेपोत्क्षेपणादिभिः ।
अनुलोम्य समाकर्षेद्योनिं प्रत्यार्जवागतम् ॥ ८३ ॥
हस्तपादशिरोभिर्यो योनिं भुग्नः प्रपद्यते ।
पादेन योनिमेकेन भुग्नोऽन्येन गुदं च यः ॥ ८४ ॥
विष्कम्भौ नाम तौ मूढौ शस्त्रदारणमर्हतः ।
मण्डलांगुलिशस्त्राभ्यां तत्र कर्म प्रशस्यते ॥ ८५ ॥
वृद्धिपत्रं हि तीक्ष्णाग्रं न योनाववतारयेत् ।
पूर्वं शिरःकपालानि दारयित्वा विशोधयेत् ॥ ८६ ॥
कक्ष्योरस्तालुचिबुकप्रदेशान्यतमे ततः ।
समालम्ब्य दृढं कर्षेत् कुशलो गर्भशङ्कुना ॥ ८७ ॥
अभिन्नशिरसन्त्वक्षिकूटयोर्गण्डयोरपि ।
बाहुं छित्वांससक्तस्य वाताध्मातोदरस्य तु ॥ ८८ ॥
विदार्य कोष्ठमान्त्राणि बहिः सम्यङ्निरस्य च ।
कटीसक्तस्य तद्वच्च तत्कपालानि दारयेत् ॥ ८९ ॥



यद्यद्वायुवशादङ्गं सज्जेत् गर्भस्य खण्डशः ।
तत्तत् छित्वा हरेत्सम्यग्रक्षन्नारीं च यत्नतः ॥ ९० ॥
गर्भस्य हि गतिं चित्रां करोति विगुणोऽनिलः ।
तत्रानल्पमतिस्तस्मादवस्थापेक्षमाचरेत् ॥ ९१ ॥
छिन्द्याद्गर्भं न जीवन्तं मातरं स हि मारयेत् ।
सहात्मना न चोपेक्ष्यः क्षणमप्यस्तजीवितः ॥ ९२ ॥
योनिसंवरणभ्रंशमक्कल्लश्वासपीडिताम् ।
पूत्युद्गारां हिमाङ्गीं च मूढगर्भां परित्यजेत् ॥ ९३ ॥
अपरापादनादौ तु पूर्वोक्तैव क्रिया हिता ।
स्नेहोष्णजलसेकाद्या वातघ्ना दीपनाः पुनः ॥ ९४ ॥
उपद्रवाश्च येऽन्ये स्युस्तान् यथास्वमुपाचरेत् ।
बलायवाषमुद्गाब्दधान्यपर्पटकार्द्रकैः ॥ ९५ ॥
लघुना पञ्चमूलेन क्वाथः सूताज्वरं जयेत् ।
तैलं धान्वन्तरं रास्ना बलातैलं च शस्यते ॥ ९६ ॥

अल्पेन मर्माश्रयिणाध्वना यत्
सूते सुखं सा खलु दैवशक्तिः ।
तद्गर्भसंगेऽपि तदाश्रयात्मा
समाहृतौ साधु यतेत वैद्यः ॥ ९७ ॥

इति गर्भोपचारकल्पो नाम
षष्ठोऽध्यायः ॥

# सप्तमोऽध्यायः ।

## बालरोगप्रतिषेधकल्पः ।

॥ अथातो बालरोगप्रतिषेधकल्पं व्याख्यास्यामः ॥

जातमात्रं विशोध्योल्वात् बालं सैन्धवसर्पिषा ।
प्रसूतिक्लेशितं चानु बलातैलेन सेचयेत् ॥ १ ॥

अश्मनोर्वादनं कर्णे कुर्याच्च चतुरंगुलात् ।
ऊर्ध्वं सूत्रेण नाभिं च बध्वा छित्वोर्ध्वमानयेत् ॥ २ ॥

सेचयेत् कुष्ठतैलेन नाभिं गन्धोदकैः पुनः ।
क्षीरिवृक्षकषायैर्वा स्नापयेत् स्वर्णतापितैः ॥ ३ ॥

उन्नाम्य तालु तर्जन्या मूर्ध्नि स्नेहपिचुं क्षिपेत् ।
द्वाराभावे गुदास्यादौ युक्त्या शस्त्रेण पाटयेत् ॥ ४ ॥

हेमधात्रीरजोयुक्तं मध्वाज्यमभिमन्त्रितम् ।
हरेणुमात्रं मेधायुर्बलार्थं प्राशयेत्तथा ॥ ५ ॥

ऐन्द्रीब्राह्मीवचाशंखपुष्पीकल्कं घृतं मधु ।
गर्भाम्भस्सैन्धववता सर्पिषा वामयेत्ततः ॥ ६ ॥

गर्भोदमिश्रे रुगिति स्तन्यं न त्रिदिनं हितम् ।
प्रथमे दिवसे तस्मात्त्रिकालं मधुसर्पिषी ॥ ७ ॥

अनन्तामिश्रिते दद्याद्यष्टी सर्पिस्तथान्ययोः ।
प्रायश्चतुर्थे दिवसे स्तन्यं मातुः प्रवर्तते ॥ ८ ॥

ततः कालद्वये दद्यात्तत्पाणितलसम्मितम् ।
नवनीतमनु स्तन्यं पाययेच्च यथोदितम् ॥ ९ ॥



पुष्ट्यै स्तन्यं मातुरेव दद्याद्धात्र्याश्च वापदि ।
शुक्क्रोधलंघनायासांस्त्यजेत्सा हितभोजना ॥ १० ॥

स्तन्ये क्षीणे शृतं क्षीरं क्षीरिणीजीवनौषधैः ।
दशमूलादियुक्तं वा यथादोषं पिबेद्वधूः ॥ ११ ॥

यच्चाद्भिरेकतां याति तद्विशुद्धं पयो वदेत् ।
वाताद्दुष्टं फेनिलं च रूक्षमुत्प्लवतेऽम्भसि ॥ १२ ॥

पित्तादुष्णाम्लकटुकं पीतराज्यप्सु दाहकृत् ।
कफात्सलवणं सान्द्रं जले मज्जति पिच्छिलम् ॥ १३ ॥

संसृष्टलिंगं संसर्गात्त्रिलिंगं सान्निपातिकम् ।
तत्तद्रोगकरं स्तन्यं शोधयेत्तत्तदौषधैः ॥ १४ ॥

स्तन्याभावे पयश्छागं गव्यं वा तद्गुणं हितम् ।
दशमेऽह्नि यथाचारं सूतिकोत्थानमाचरेत् ॥ १५ ॥

नामापि शस्तं बालस्य द्वादशे दिवसे वदेत् ।
ततः कुलोचिते काले यथाचारं शुभेऽहनि ॥ १६ ॥

कर्णौ दैवकृते छिद्रे विध्याद्धात्र्यङ्कवर्तिनः ।
प्राग्दक्षिणं कुमारस्य भिषग्वामं तु योषितः ॥ १७ ॥

कालिकोर्ध्वमधो रिक्ता मर्मरी पार्श्वयोस्सिराः ।
तद्वेधात् ज्वररुक्शोफमन्यास्तंभापतानकाः ॥ १८ ॥

यथादोषं क्रिया तेषां स्थाने नासृग्रुजोद्भवः ।
सञ्चार्य वर्तिं स्नेहाक्तां स्थूलां दद्यात् त्र्यहे त्र्यहे ॥ १९ ॥

अथान्नं प्राशयेद्युक्तं क्षीरं च लघु बृंहणम् ।
व्याधींश्चास्य जयेत्सौम्यैर्भेषजैरविषादकैः ॥ २० ॥

क्षीरादिमधुरस्नेहप्राशनाच्च वयोवशात् ।
प्रायः कफोद्भवा रोगा हितं तद्वमनं मुहुः ॥ २१ ॥

स्तन्यस्य तृप्तं क्षीरान्नक्षीरपं वामयेच्छिशुम् ।
पीतवन्तन्तनुं पेयामन्नादं घृतसंयुतम् ॥ २२ ॥
विरेचनं रोगवशात्कुर्याद्योगैश्शिशूचितैः ।
शिशोस्तीक्ष्णामतीक्ष्णां च रोदनाल्लक्षयेद्रुजम् ॥ २३ ॥
स्वयं स्पृशेत यं देशं यत्रांगं स्पर्शनाक्षमम् ।
तत्र विद्याद्रुजं मूर्धरुजञ्चाक्षिनिमीलनात् ॥ २४ ॥
हृदि जिह्वोष्ठदशनश्वासमुष्टिनिपीडनैः ।
कोष्ठे विबन्धवमथुस्तनद्वेषान्त्रकूजनैः ॥ २५ ॥
आध्मानपृष्ठनमनजठरोन्नमनैरपि ।
बस्तौ गुह्ये च विण्मूत्रासङ्गोत्त्रासदिगीक्षणैः ॥ २६ ॥
अथ धात्र्याः क्रियां कुर्यात् स्तन्यपस्य यथामयम् ।
तत्र वातात्मके स्तन्ये दशमूलं त्र्यहं पिबेत् ॥ २७ ॥
अथवाग्निवचापाठाकटुकाकुष्ठदीप्यकम् ।
सभार्ङ्गीदारुसरलवृश्चिकालीकणोषणम् ॥ २८ ॥
ततो घृतं वातहरं रेकस्वेदादि चोदितम् ।
रास्नाजमोजसरलदेवदारुरजोन्वितम् ॥ २९ ॥
बालो लिह्यात् घृतं तैर्वा विपक्वं ससितोपलम् ।
पित्तदुष्टेऽमृताभीरुपटोलीनिंबचन्दनम् ॥ ३० ॥
धात्री कुमारश्च पिबेत्क्वाथयित्वा सशारिवम् ।
शारिवादिं पटोलादिं पद्मकादिं तथा गणम् ॥ ३१ ॥
तैर्घृतं वा पित्तहरो विरेकश्शीतलेपनम् ।
कफात्मके वामयित्वा धात्रीं मुस्तादि पाययेत् ॥ ३२ ॥
तद्वल्लवंगपृथ्वीकासुरदारुकलिंगकान् ।
अथवातिविषामुस्ताषड्ग्रन्थापञ्चकोलकम् ॥ ३३ ॥



यष्ट्याह्वसैन्धवयुतं कुमारं पाययेद्घृतम् ।
सिन्धूत्थपिप्पलीभ्यां वा पिष्टैः क्षौद्रयुतैरथ ॥ ३४ ॥
रथपुष्पैः स्तनौ लिम्पेच्छिशोस्तु दशनच्छदौ ।
सुखमेवं वमेद्बालः तगराद्यं च पाययेत् ॥ ३५ ॥
स्तन्ये त्रिदोषमलिने दुर्गन्ध्यामं जलोपमम् ।
विबद्धमच्छं विच्छिन्नं पिच्छिलं चोपवेश्यते ॥ ३६ ॥
शकृन्नानाव्यथावर्णं मूत्रं पीतं घनं सितम् ।
ज्वरारोचकतृट्छर्दिशुष्कोद्गारविजृंभिकाः ॥ ३७ ॥
अंगभंगोङ्गविक्षेपः कूजनं वेपथुर्भ्रमः ।
घ्राणाक्षिमुखपाकाद्या जायन्तेऽन्येऽपि तं गदम् ॥ ३८ ॥
क्षीरालसकमित्याहुरत्ययं चातिदारुणम् ।
धात्रीं शिशुं वामयित्वा वचादिं योजयेद्गणम् ॥ ३९ ॥
निशादिं वाथवा माद्रीपाठातिक्ताघनामयान् ।
पाठाशुण्ठ्यमृतातिक्तादेवाह्वकणशारिवाः ॥ ४० ॥
समुस्तमूर्वेन्द्रयवाः स्तन्यदोषहराः परम् ।
दन्तोत्पत्तौ ज्वरच्छर्दिकासनेत्ररुजादयः ॥ ४१ ॥
जायन्तेऽत्र यथादोषं कुर्याद्युक्त्या चिकित्सितम् ।
दन्तपाळीं समधुना चूर्णेन प्रतिसारयेत् ॥ ४२ ॥
पिप्पल्या धातकीपुष्पधात्रीफलकृतेन वा ।
दन्तोद्भेदोत्थरोगेषु न बालमतियन्त्रयेत् ॥ ४३ ॥
स्वयमप्युपशाम्यन्ति जातदन्तस्य तद्गदाः ।
समंगाधातकीलोध्रकुटन्नटबलाद्वयैः ॥ ४४ ॥
महासहाक्षुद्रसहामुद्गबिल्वशलाटुभिः ।
सकर्पासीफलैस्तोयैस्साधितैस्साधितं घृतम् ॥ ४५ ॥

क्षीरमस्तुयुतं हन्ति शीघ्रं दन्तोद्भवोद्भवान् ।
विविधानामयानेतद् वृद्धकाश्यपनिर्मितम् ॥ ४६ ॥
सैन्धवव्योषशार्ङ्गेष्टापाठागिरिकदर्वदान् ।
शुष्यतो मधुसर्पिर्भ्यामरुच्यादिषु योजयेत् ॥ ४७ ॥
क्षीरावचाद्विबृहतीकाकोलीपिप्पलीनतैः ।
निचुलोत्पलवर्षाभूभार्ङ्गीमुस्तैश्च कार्षिकैः ॥ ४८ ॥
सिद्धं प्रस्थार्धमाज्यस्य स्रोतसां शोधनं परम् ।
सिद्धार्थगन्धासुरसकणागर्भं च तद्गुणम् ॥ ४९ ॥
यष्ट्याह्विपिप्पलीलोध्रपद्मकोत्पलचन्दनैः ।
तालीससारिवाभ्यां च साधितं शोषजिद् घृतम् । ॥ ५० ॥
वचावयस्थानगरकायस्थाचोरकैः शृतम् ।
बस्तमूत्रसुराभ्यां च तैलमभ्यञ्जने हितम् ॥ ५१ ॥
लाक्षारससमं तैलं तैलान्मस्तु चतुर्गुणम् ।
अश्वगन्धानिशादारुकौन्तीकुष्ठाब्दचन्दनैः ॥ ५२ ॥
समूर्वारोहिणीरास्नाशताह्वामधुकैः समैः ।
सिद्धं लाक्षादिकं नाम तैलमभ्यञ्जनादिदम् ॥ ५३ ॥
बल्यं ज्वरक्षयोन्मादश्वासापस्मारपाप्मजित् ।
यक्षराक्षसभूतघ्नं गर्भिणीनां च शस्यते ॥ ५४ ॥
तालुमांसे कफः क्रुद्धः कुरुते तालुकण्टकम् ।
तेन तालुप्रदेशस्य निम्नता मूर्ध्नि जायते ॥ ५५ ॥
तालुपातः स्तनद्वेषः कृच्छ्रात्पानं शकृद्द्रवम् ।
तृष्णास्यकर्णाक्षिरुजा ग्रीवादुर्धरता वमिः ॥ ५६ ॥
तत्रोत्क्षिप्य यवक्षारक्षौद्राभ्यां प्रतिसारयेत् ।
तालु तद्वत्कणाशुण्ठीगोशकृद्रससैन्धवैः ॥ ५७ ॥



हरीतकीवचाकुष्ठकल्कं माक्षिकसंयुतम् ।
पीत्वा कुमारः स्तन्येन मुच्यते तालुकण्टकात् ॥ ५८ ॥
मलोपलेपात्स्वेदाद्वा गुदे रक्तकफोद्भवः ।
ताम्रो व्रणोऽन्तः कण्डूमान् जायते भूर्युपद्रवः ॥ ५९ ॥
स्तन्यदोषोद्भवं प्रायो गुदकुट्टं वदन्ति तम् ।
तत्र धात्र्याः पयःशोध्यं पित्तश्लेष्महरौषधैः ॥ ६० ॥
शृतशीतं च शीताम्बु पाययेदन्तरान्तरा ।
सक्षौद्रताक्ष्यशैलेन व्रणं तेन च लेपयेत् ॥ ६१ ॥
त्रिफलाबदरीप्लक्षत्वक्क्वाथपरिषेचितम् ।
कासीसरोचनातुत्थमनोह्वालरसाञ्जनैः ॥ ६२ ॥
लेपयेदम्लपिष्टैर्वा चूर्णितैरवचूर्णयेत् ।
सुसूक्ष्मैरथवा यष्टीशङ्खसौवीरकाञ्जनैः ॥ ६३ ॥
रागकण्डूत्कटे कुर्याद्रक्तस्रावं जलौकसा ।
सर्वं च पित्तव्रणजिच्छस्यते गुदकुट्टके ॥ ६४ ॥
मधुनातिविषाशुण्ठीपिप्पलीर्लेहयेच्छिशुम् ।
एकां वातिविषां कासज्वरच्छर्दिरुपद्रुतम् ॥ ६५ ॥
पीतं पीतं वमति यः स्तन्यं तं मधुसर्पिषा ।
द्विवार्ताकीफलरसं पञ्चकोलं च लेहयेत् ॥ ६६ ॥
त एव दोषा दूष्याश्च ज्वराद्या व्याधयश्च यत् ।
अतस्तदेव भैषज्यं मात्रा त्वस्य कनीयसी ॥ ६७ ॥
मृदुत्वादल्पकायत्वात्सर्वान्नानुपसेवनात् ।
मूर्ध्न्यूष्मणि तु बालानां स्तन्यामलकचन्दनैः ॥ ६८ ॥
मूर्ध्न्यालेपो हितोऽथास्य पिटकायां च मस्तके ।
क्षीरिणोदुम्बरफलं द्रोणपुष्पं तिलं समम् ॥ ६९ ॥

पक्त्वा पिष्ट्वा समालिम्पेन्नवनीतेन योजितम् ।
हरिचन्दनयष्ट्याह्वपथ्याः पिष्टा घृतेन वा ॥ ७० ॥
दूर्वारसे घृतं यष्टीकल्कं तद्व्रणनाशनम् ।
कपालार्शसि जाते तु धुर्धूरस्वरसे पचेत् ॥ ७१ ॥
तद्बीजकल्कं केराब्धं तदभ्यङ्गे प्रशस्यते ।
पत्रैर्मातुलताम्बूलतुलसीनां विभर्जितम् ॥ ७२ ॥
सगेहधूमैः केराब्धं कपालार्शोविनाशनम् ।
दूर्वागुडूचीस्वरसे गोपीचन्दनयष्टिभिः ॥ ७३ ॥
सेव्येन सपयस्तैलं शस्तं बालविसर्पके ।
कर्णान्तरस्था पिटका दूर्वाक्षीरिप्रवालकैः ॥ ७४ ॥
निशानिचदलोपेतैस्तक्रे पक्त्वा सुपेषितैः ।
प्रशाम्येन्मधुसंयुक्तैर्लेपात्सा तु कफोत्कटा ॥ ७५ ॥
शुण्ठीराम्नाभृङ्गगेहैस्तकपिष्टैर्विधीयते ।
कर्णपूयन्तु पिचुना साधु संशोध्य पूरयेत् ॥ ७६ ॥
कर्णौ कुलत्थमधुना केराब्धश्चात्र शस्यते ।
तुलसीस्वरसे सिद्धं कुन्दुरुष्कं वचा निशा ॥ ७७ ॥
कारस्करात्किसलयश्चैतैरिन्दुविमिश्रितम् ।
जम्बीरपत्रस्वरसे कार्पासास्थिप्रसाधितम् ॥ ७८ ॥
तैलं च कर्णपूरेण पूयस्रुतिविनाशनम् ।
बिल्वमूर्वादलरसे कृष्णजीरककल्कितम् ॥ ७९ ॥
तैलं केरपयोयुक्तमभ्यङ्गात्कर्णपूयनुत् ।
पाककण्डूरक्तदुष्टे नेत्रे सेचनमाचरेत् ॥ ८० ॥
रसेन पल्लवोत्थेन मधुयुक्तेन बिन्दुशः ।
शिग्रोर्वा सहदेव्या वा मायूर्या भ्रमरस्य वा ॥ ८१ ॥



कोष्णाम्बुयुक्क्षीरेण हितं वर्त्मप्रमार्जनम् ।
शुक्लोद्भवे फलं पुष्पं दलं च रजतारिजम् ॥ ८२ ॥
प्रमर्द्य स्तन्यसहितं सिञ्चेच्छुक्लप्रशान्तये ।
सहदेवीरसे सप्तशोषितां त्रिदिनं पिचुम् ॥ ८३ ॥
वराम्लिकापत्रसिरापारन्तीपुष्पचूर्णकैः ।
मिश्रितां कारयेद्वर्तिं तया लब्धा मषी शुभा ॥ ८४ ॥
नेत्ररोगेषु बालानामञ्जनार्थं दिने दिने ।
पिटकासु मुखे पथ्यानवनीतं सुखावहम् ॥ ८५ ॥
कालशाकदलं दीर्घ्यं सैन्धवं तक्रसाधितम् ।
पलाशवल्कलोपेतं बालानां क्रिमिनाशनम् ॥ ८६ ॥
द्रोणजीरकयोः क्वाथः क्रिमिहा द्रोणजोऽपि वा ।
क्रिमिकोपे समधिके मासि मासि विरेचनम् ॥ ८७ ॥
कृत्वा कृमिहरैः शुद्धे कोष्ठे क्वाथं मुहुः पिबेत् ।
पक्वकोशविलिः पक्वं सर्वाण्यैर्दिनसप्तकं ॥ ८८ ॥
हरिपर्णीमूलजातो वनसूरणजोऽपि वा ।
स्वरसः कृमिकुलं क्षिप्रं पातयेद्बालकोदरात् ॥ ८९ ॥
अतिसारविसर्पादाविदं संक्षिप्य कल्पयेत् ।
कार्यं तैलं स्वर्णं वापि दोषदृष्टिविचक्षणः ॥ ९० ॥
स्कन्दो विशाखो मेषाख्यः श्वग्रहः पितृसंज्ञितः ।
शकुनिः पूतना शीतपूतना दृष्टिपूतना ॥ ९१ ॥
मुखमण्डिनिका तद्वद्रेवती शुष्करेवती ।
हन्तुं रन्तुं ग्रहा भोक्तुं ते शिशून् प्रविशन्ति हि ॥ ९२ ॥
तथिदं जूर्तित्रासजृम्भाभ्रूक्षेपदीनताः ।
फेनस्रावोर्ध्वदृष्ट्योष्ठदन्तदंशप्रजागराः । ॥ ९३ ॥

रोदनं कूजनं स्तन्यविद्वेषः स्वरवैकृतम् ।
नखैरकस्मात् परितः स्वधात्र्यङ्गविलेखनम् ॥ ९४ ॥
तत्रैकपक्षहानिः स्यात् स्कन्देनैकेक्षणस्रुतिः ।
स्कन्दापस्मृतिः शिरःक्षेपो वैकल्यं मृतिरेव वा ॥ ९५ ॥
विशाखात् जृम्भमाणस्य शकृन्मूत्रप्रवर्तनम् ।
पूयशोणितगन्धश्च हस्तभ्रूपादनर्तनम् ॥ ९६ ॥
जिह्वादंशो मुहुः केशलुञ्चनं नष्टसंज्ञता ।
मेषास्यान्मूर्छनाध्मानहिध्मैकेक्षणशोफता ॥ ९७ ॥
श्वग्रहाद्धृष्टरोमत्वं स्वेदश्चक्षुर्निमीलनम् ।
श्वतुल्यक्रोशनं वाजिविड्गन्धो बहिरायतिः ॥ ९८ ॥
पितृग्रहादतीसारः स्रस्तांगत्वं मुखे व्रणः ।
अङ्गेष्वाक्षेपविक्षेपौ शवगन्धौ विवर्णता ॥ ९९ ॥
पक्षिग्रहादतीसारः स्रस्ताङ्गत्वं मुखे व्रणः ।
गुदेऽपि वा सन्धिषु स्युः स्फोटा रुग्दाहपाकिनः ॥ १०० ॥
निशाबला दिवाक्षीणा भीतिः शकुनिगन्धिता ।
पूतनायां वमिः कम्पस्तन्द्रा रात्रौ प्रजागरः ॥ १०१ ॥
हिध्माध्मानशकृद्भेदपिपासामूत्रनिग्रहाः ।
स्रस्तहृष्टाङ्गरोमत्वं काकवत्पूतिगन्धिता ॥ १०२ ॥
शीतपूतनया प्रायः पूर्ववत्तिर्यगीक्षणम् ।
पार्श्वस्यैकस्य शीतत्वमुष्णत्वमितरस्य च ॥ १०३ ॥
दृष्टिपूतनया चापि पूर्ववद्दृष्टिरुक् पुनः ।
पोत्थकीजन्म शूनत्वं वर्चोदुर्गन्धभिन्नता ॥ १०४ ॥
हिध्मा शोषः स्वरकौर्यं वैवर्ण्यं मत्स्यगन्धिता ।
मुखमण्डितया पाणिपादास्यरमणीयता ॥ १०५ ॥



सिराभिरसिताभाभिराचितोदरता ज्वरः ।
अरोचकोऽङ्गग्लपनं गोमूत्रसमगन्धिता ॥ १०६ ॥
रेवत्यां श्यावनीलत्वं कर्णनासाक्षिमर्दनम् ।
वक्त्रवक्रत्वरक्तत्वे ज्वरः पीतं शकृद्द्रवम् ॥ १०७ ॥
स्याच्छोषः शुष्करेवत्यां नानावर्णपुरीषता ।
स्वरदैन्यं विवर्णत्वमुदरे ग्रन्थयः सिराः ॥ १०८ ॥
यस्य नानाविधं वर्चः श्यावं तालु च तं त्यजेत् ।
अबालानपि बाधन्ते पापाद्भूतादयो ग्रहाः ॥ १०९ ॥
हन्तुकामे ग्रहे बालो महान् वा स्रुतनासिकः ।
क्षतजिह्वः क्वणन् बाढमसुखी साश्रुलोचनः ॥ ११० ॥
दुर्वर्णो हीनवदनः पूतिगन्धश्च जायते ।
क्षामो मूत्रपुरीषं स्वं मृद्नाति न जुगुप्सते ॥ १११ ॥
हस्तौ चोद्यम्य संरब्धो हन्त्यात्मानं तथापरम् ।
तद्वच्च शस्त्रकाष्ठाद्यैरग्निं वा दीप्तमाविशेत् ॥ ११२ ॥
अप्सु मज्जेत् पतेत् कूपे कुर्यादन्यच्च तद्विधम् ।
तृड्दाहमोहान् पूयस्य छर्दनं वा प्रवर्तयेत् ॥ ११३ ॥
रक्तं च सर्वमार्गेभ्यो रिष्टोत्पत्तिश्च तं त्यजेत् ।
रहःस्त्रीरतिसंलापगन्धस्रग्भूषणप्रियः ॥ ११४ ॥
हृष्टः शान्तश्च दुस्साध्यो रतिकामेन पीडितः ।
दीनः परिमृशेद्वक्त्रं शुष्कोष्ठगलतालुकः ॥ ११५ ॥
शङ्कितं वीक्षते रौति ध्यायत्यायाति भीतताम् ।
अन्नमन्नाभिलाषेऽपि दत्तं नातिबुभुक्षते ॥ ११६ ॥
गृहीतं बलिकामेन तं विद्यात्सुखसाधनम् ।
हन्तुकामं जयेद्धोमैः सिद्धमन्त्रप्रवर्तितैः ॥ ११७ ॥

इतरौ तु यथाकामं रतिबल्यादिदानतः ।
स्नानधूपप्रलेपाद्यैर्ग्रहपीडाकरैरपि ॥ ११८ ॥
अथ साध्यग्रहं बालं गेहे नित्यानले शुचौ ।
पुराणसर्पिषाभ्यक्तं परिषिञ्चेत्सुखाम्बुना ॥ ११९ ॥
साधितेन बलानिम्बवैजयन्तीनृपद्रुमैः ।
पारिभद्रककट्वङ्गजम्बूवरणकत्तृणैः ॥ १२० ॥
कपोतवङ्कापामार्गपाटलीमधुशिग्रुभिः ।
काकजङ्घामहाश्वेताकपित्थक्षीरिपादपैः ॥ १२१ ॥
सकरञ्जकदम्बैश्च दशपुष्पाभिधैश्च वा ।
द्वीपिव्याघ्रभुजङ्गर्क्षचर्मभिर्धूपमाचरेत् ॥ १२२ ॥
पूतीदशाङ्गीभल्लातबलासिद्धार्थदीप्यकैः ।
सकुष्ठैः सघृतैर्धूपः सर्वग्रहविमोक्षणः ॥ १२३ ॥
सर्षपा निम्बपत्राणि मूलमश्वखुराह्वया ।
भूर्जपत्रं घृतं धूपः सर्वग्रहविमोक्षणः ॥ १२४ ॥
अनन्ताम्राश्थितगरं मरिचं मधुरो गणः ।
शृगालविन्ना मुस्ता च कल्कितैस्तैर्घृतं पचेत् ॥ १२५ ॥
दशमूलरसक्षीरयुक्तं तद्ग्रहजित् परम् ।
कल्याणकं पञ्चगव्यं ब्राह्मीसर्पिश्च पाययेत् ॥ १२६ ॥
सिद्धार्थकाद्यौ हिङ्ग्वादिं कार्पासादिं च योजयेत् ।

सम्मृष्टसंसिक्तविविक्तदेशे
सदा प्रदीपानलपुष्पयुक्ते ।
स्थितिर्ग्रहघ्नी शुचिभृत्यवर्गे
शिवस्य देव्यास्तपसा च पूजा ॥ १२७ ॥

इति बालरोगप्रतिषेधकल्पो नाम
सप्तमोऽध्यायः ॥

---

# अष्टमोऽध्यायः ।

## अङ्गविज्ञानकल्पः ।

॥ अथातोऽङ्गविज्ञानकल्पं व्याख्यास्यामः ॥

शिरोन्तराधिर्द्वौ बाहू सक्थिनी च समासतः ।
षडङ्गमङ्गं प्रत्यङ्गं तस्याक्षिहृदयादिकम् ॥ १ ॥
त्वचश्च्याः सप्त चाधारा रक्तस्याद्याः क्रमात् परं ।
कफामपित्तपक्वानां वायोर्मूत्रस्य च स्मृताः ॥ २ ॥
गर्भाशयोऽष्टमः स्त्रीणामामपक्वाशयान्तरे ।
कोष्ठाङ्गानि स्थितान्येषु हृदयं क्लोम पुप्फुसः ॥ ३ ॥
यकृत्प्लीहोण्डुकं वृक्कौ नाभिडिम्बान्त्रबस्तयः ।
स्रोतांसि नासिकाकर्णनेत्रपाय्वास्यमेहनम् ॥ ४ ॥
स्तनौ रक्तपथश्चेति नारीणामधिकं त्रयम् ।
जीवितायतनान्यन्तःस्रोतांस्याहुस्त्रयोदश ॥ ५ ॥
प्राणधातुमलाम्बोऽन्नवाहीन्यस्यायतनानि च ।
यथा न दुष्यन्त्यहितान्यानि रक्षेत्प्रयत्नतः ॥ ६ ॥
अतिप्रवृत्तिः सङ्गो वा सिराणां ग्रन्थयोऽपि वा ।
विमार्गतो वा गमनं स्रोतसां दुष्टिलक्षणम् ॥ ७ ॥
व्यधे तु स्रोतसां मोहः कम्पाध्मानवमिज्वराः ।
प्रलापः शूलविण्मूत्ररोधो मरणमेव वा ॥ ८ ॥

स्रोतोविद्धमतो वैद्यः प्रत्याख्याय प्रसाधयेत् ।
उद्धृत्य शल्यं यत्नेन सद्यः क्षतविधानतः ॥ ९ ॥

दश मूलसिरा हृत्स्थास्ताः सर्वाः सर्वतो वपुः ।
रसात्मकं वहन्त्योजस्तन्निबद्धं हि चेष्टितम् ॥ १० ॥

स्थूलमूलाः सुसूक्ष्माग्राः पत्ररेखाप्रतानवत् ।
शाखारूपेण वपुषि ताः स्युः सप्तशतानि च ॥ ११ ॥

धमन्यो नाभिसंबद्धा विंशतिश्चतुरुत्तराः ।
ताभिः परिवृता नाभिश्चक्रनाभिरिवारकैः ॥ १२ ॥

ताभिश्चोर्ध्वमधस्तिर्यग्देहोऽयमनुगृह्यते ।
दश जीवितधामानि शिरो रसनबन्धनम् ॥ १३ ॥

कण्ठोऽस्रं हृदयं नाभिर्बस्तिः शुक्रौजसी गुदः ।
सिरा जालधरा नाम तिस्रश्चाभ्यन्तराश्रिताः ॥ १४ ॥

द्वे द्वे वङ्क्षणयोर्द्वे द्वे कटीकतरुणे तथा ।
एकैकां पार्श्वगां पार्श्वद्वये पृष्ठे तु वंशतः ॥ १५ ॥

द्वे द्वे तथोर्ध्वगामिन्यावुदरे च तथा पुनः ।
रोमराजीमुभयतो द्वे द्वे *वत्से चतुर्दश ॥ १६ ॥

स्तनरोहिततन्मूलहृदये च पृथग्द्वयम् ।
अवस्तम्भाख्ययोरेकां तथापालापयोरपि ॥ १७ ॥

नीले कृकाटिके मन्ये विधुरे चाष्टमातृकाः ।
षोडशैवं गळे हन्वोः सिरे द्वे सन्धिबन्धने ॥ १८ ॥

जिह्वाधो रसबोधिन्यौ द्वे द्वे वचनशक्तिदे ।
नासायां गन्धबोधिन्यौ द्वे चैकां तालुसंश्रिताम् ॥ १९ ॥

---

* वक्षसि ।



निमेषोन्मेषकारिण्यौ द्वे द्वे चापाङ्गसंश्रये ।
द्वे चेति षण्नयनयोर्ललाटे स्थपनीश्रिताम् ॥ २० ॥

आवर्तमर्मगे द्वे च चतस्रश्च कचान्तगाः ।
सप्तैवं कर्णयोश्च द्वे शब्ददे द्वे च शङ्खगे ॥ २१ ॥

एकैकां पृथगुत्क्षेपसीमन्ताधिपतिस्थिताम् ।
मूर्ध्न्येवमष्टौ च सिरा न शस्त्रेण परामृशेत् ॥ २२ ॥

सिराजालावृतेष्वङ्गेष्ववेध्यज्ञानसिद्धये ।
गणितास्तत्र विज्ञेयाः शृङ्गग्राहिकया गुरोः ॥ २३ ॥

अवेध्या ग्रथिता वक्राः संकीर्णाः सन्धिसंश्रिताः ।
तत्र श्यावारुणाः सूक्ष्माः पूर्णरिक्ताः क्षणात् सिराः ॥ २४ ॥

प्रस्पन्दिन्यश्च वातास्रं वहन्ते पित्तशोणितम् ।
स्पर्शोष्णाः शीघ्रवाहिन्यो नीलपीताः कफं पुनः ॥ २५ ॥

गौराः स्निग्धाः स्थिराः शीताः संसृष्टं लिङ्गसंकरे ।
षट् कूर्चाः सप्त सीवन्यश्चतस्रो मांसरज्जवः ॥ २६ ॥

जालानि कण्डराश्चाङ्गे पृथक् षोडश निर्दिशेत् ।
चतुर्दशास्थिसंघाताः सीमान्ता द्विगुणा नव ॥ २७ ॥

अस्थ्नां शतानि षष्ट्या च त्रीणि दन्तनखैः सह ।
स्नाय्नां नवशती पञ्च पुंसां पेशीशतानि च ॥ २८ ॥

अधिका विंशतिः स्त्रीणां योनिस्तनसमाश्रयाः ।
इति संक्षेपतः प्रोक्ताश्शरीरावयवाः पृथक् ॥ २९ ॥

व्यापारैरथवाकारैराधाराधेयभावतः ।
संख्याभिर्वा न शक्यन्ते संख्यातुं बहुभेदतः ॥ ३० ॥

स्थिता पक्वाशयद्वारि धमनी वह्निवर्धिनी ।
भक्तमार्गं निरुध्यान्नग्रहणात् ग्रहणी मता ॥ ३१ ॥

अधो नयति पक्वान्नं बलवत्याममन्यथा ।
यत्तैजसगुणाधिक्याद्द्रवं भुक्तपाचकम् ॥ ३२॥
पक्वामाशयमध्यस्थं पित्तं तद्वह्निसंज्ञितम् ।
शब्दः स्पर्शश्च रूपं च रसो गन्धः क्रमात् गुणाः ॥ ३३॥
खानिलाग्न्यब्भुवामेकगुणवृद्ध्यन्वयाः परे ।
तत्र खात् खानि देहेऽस्मिन् श्रोत्रं शब्दो विविक्तता ॥ ३४॥
वातात् स्पर्शत्वगुच्छ्वासा वह्नेर्दृग्रूपपक्तयः ।
आप्या जिह्वारसक्लेदा घ्राणगन्धास्थि पार्थिवम् ॥ ३५॥
मृद्वत्र मातृजं रक्तमज्जमांसगुदादिकम् ।
पैतृकन्तु स्थिरं शुक्लधमन्यस्थिकचादिकम् ॥ ३६॥
आत्मजं चित्तमक्षाणि नानायोनिषु जन्म च ।
सात्म्यजं त्वायुरारोग्यमनालस्यं प्रभा बलम् ॥ ३७॥
रसजं वपुषो जन्म वृत्तिर्वृद्धिरलोल्पता ।
सात्विकं शौचमास्तिक्यं शुक्लधर्मरतिर्मतिः ॥ ३८॥
राजसं बहुभाषित्वं मानक्रुद्दम्भमत्सराः ।
तामसं भयमज्ञानं निद्रालस्यं विषादिता ॥ ३९॥
सप्तोत्तरं मर्मशतं तेषामेकादशादिशेत् ।
पृथक् सक्थ्नोस्तथा बाह्वोस्त्रीणि कोष्ठे नवोरसि ॥ ४०॥
पृष्ठे चतुर्दशोर्ध्वन्तु जत्रोस्त्रिंशच्च सप्त च ।
मध्ये पादतलस्याहुरभितो मध्यमांगुलिम् ॥ ४१॥
तलहृन्नाम रुजया तत्र विद्धस्य पञ्चता ।
अङ्गुष्ठांगुलिमध्यस्थं क्षिप्रमाक्षेपमारणम् ॥ ४२॥
तस्योर्ध्वं द्व्यङ्गुले कूर्चं पादभ्रमणकम्पकृत् ।
गुल्फसन्धेरधः कूर्चशिरश्शोफरुजाकरम् ॥ ४३॥



जंघाचरणयोस्सन्धौ गुल्फो रुक्स्तम्भमान्द्यकृत् ।
जंघान्तरे त्विन्द्रबस्तिर्मारयत्यसृजः क्षयात् ॥ ४४ ॥
जंघोर्वोस्संगमे जानुः खञ्जता तत्र जीवतः ।
जानुनस्त्र्यंगुलादूर्ध्वमाण्यूरुस्तम्भशोषकृत् ॥ ४५ ॥
उर्व्यूरुमध्ये तद्वेधात्सक्थिशोषोऽस्रसंक्षयात् ।
ऊरुमूले लोहिताक्षं हन्ति पक्षमसृक् क्षयात् ॥ ४६ ॥
मुष्कवंक्षणयोर्मध्ये विटपं षण्डताकरम् ।
इति सक्थ्नोस्तथा बाह्वोर्मणिबन्धोऽत्र गुल्फवत् ॥ ४७ ॥
कूर्परं जानुवत् कौण्यं तयोर्विटपवत् पुनः ।
कक्षाक्षमध्ये कक्ष्याधृक् कुणित्वं तत्र जायते ॥ ४८ ॥
स्थूलान्त्रबद्धस्सद्योघ्नो विड्वातवमनो गुदः ।
मूत्राशयो धनुर्वक्रो बस्तिरल्पास्रमांसगः ॥ ४९ ॥
एकाधोवदनः कट्या मध्ये सद्यो निहन्त्यसून् ।
ऋतेऽश्मरीव्रणाद्विद्धो व्रणो रोहेच्च यत्नतः ॥ ५० ॥
देहामपक्वस्थानानां मध्ये सर्वसिराश्रयः ।
नाभिस्सोऽपि हि सद्योघ्नो द्वारमामाशयस्य तु ॥ ५१ ॥
सत्त्वादिधाम हृदयं स्तनोरःकोष्ठमध्यगम् ।
स्तनरोहितमूलाख्ये द्व्यंगुले स्तनयोर्वदेत् ॥ ५२ ॥
ऊर्ध्वाधोऽस्रकफापूर्णकोष्ठो नश्येत्तयोः क्रमात् ।
अपस्तंभावुरःपार्श्वे नाड्यावनिलवाहिनी ॥ ५३ ॥
रक्तेन पूर्णकोष्ठोऽत्र श्वासात् कासाच्च नश्यति ।
पृष्ठवंशोरसोर्मध्ये तयोरेव च पार्श्वयोः ॥ ५४ ॥
अधोंऽसकूटयोर्विद्यादपालापाख्यमर्मणी ।
तयोः कोष्ठेऽसृजा पूर्णे म्रियेऽघातेन पूयताम् ॥ ५५ ॥

वंशस्य पार्श्वयोरूर्ध्वे कटीकतरुणे स्फिजो: ।
तत्र रक्तक्षयात् पाण्डुर्हीनरूपो विनश्यति ॥ ५

पृष्ठवंशं ह्युभयतो यौ सन्धी कटिपार्श्वयो: ।
जघनस्य बहिर्भागे मर्मणी तौ कुकुन्दरौ ॥ ५

चेष्टाहानिरध:काये स्पर्शाज्ञानं च तद्व्यधात् ।
नितंबौ पार्श्वमध्यस्थौ कटीकतरुणोपरि ॥ ५

अध:शरीरे शोफोऽत्र दौर्बल्यं मरणं तत: ।
पार्श्वान्तरनिबद्धौ च मध्ये जघनपार्श्वयो: ॥ ५

तिर्यगूर्ध्वं च निर्दिष्टौ पार्श्वसन्धी तयोर्व्यधात् ।
रक्तपूरितकोष्ठस्य शरीरान्तरसंभव: ॥ ६

स्तनमूलार्जवे भागे पृष्ठवंशाश्रिते सिरे ।
बृहत्यौ तत्र विद्धस्य मरणं रक्तसंक्षयात् ॥ ६

बाहुमूलाभिसंबद्धे पृष्ठवंशस्य पार्श्वयो: ।
अंसयो: फलके बाहुस्वापशोषौ तयोर्व्यधात् ॥ ६

ग्रीवामुभयत: स्नाव्नी ग्रीवाबाहुशिरोऽन्तरे ।
स्कन्धांसपीठसंबद्धावंसौ बाहुक्रियाहरौ ॥ ६

कण्ठनाळीमुभयतस्सिरा हनुसमाश्रिता: ।
चतस्रस्तासु नीले द्वे मन्ये द्वे मर्मणी स्मृते ॥ ६

स्वरप्रणाशवैकृत्यरसाज्ञानानि तद्व्यधात् ।
कण्ठनाळीमुभयतो जिह्वानासाश्रिता: सिरा: ॥ ६

पृथक् चतस्रस्तास्सद्यो घ्नन्त्यसून्मातृकाह्वया: ।
कृकाटिके शिरोग्रीवासन्धी तत्र चलं शिर: ॥ ६

अधस्तात् कर्णयोर्निम्ने विधुरे श्रुतिहारिणी ।
फणावुभयतो घ्राणमार्गे श्रोत्रपथानुगौ ॥ ६



अन्तर्गळस्थितौ वेधात् गन्धविज्ञानहारिणौ ।
नेत्रयोर्बाह्यतोऽपांगौ भ्रुवो: पुच्छान्तयोरध: ॥ ६८ ॥

तथोपरि भ्रुवोर्निम्नावावर्तावान्ध्यमेषु तु ।
हनुकर्णललाटान्ते शंखौ सद्योविनाशिनौ ॥ ६९ ॥

केशान्ते शंखयोरूर्ध्वमुत्क्षेपौ स्थपनी पुन: ।
भ्रुवोर्मध्ये त्रयेऽप्यत्र शल्ये जीवेदनुद्धृते ॥ ७० ॥

स्वयं वा पतिते पाकात् सद्यो नश्यति तूद्धृते ।
जिह्वाक्षिनासिकाश्रोत्रखचतुष्टयसंगमे ॥ ७१ ॥

तालुन्यास्यानि चत्वारि स्रोतसां तेषु मर्मसु ।
विद्धश्शृङ्गाटकाख्येषु सद्यस्त्यजति जीवितम् ॥ ७२ ॥

कपालसन्धय: पञ्च सीमन्तास्तिर्यगूर्ध्वगा: ।
भ्रमोन्मादमनोनाशास्तेषु विद्धेषु नश्यति ॥ ७३ ॥

आन्तरो मस्तकस्योर्ध्वं सिरासन्धिसमागम: ।
रोमावर्तोऽधिपो नाम मर्म सद्यो हरत्यसून् ॥ ७४ ॥

प्रसिद्धान्येवमुक्तानि सामान्येन तु लक्षयेत् ।
विषमं स्पन्दनं यत्र पीडिते रुक् च मर्म तत् ॥ ७५ ॥

तेषां विटपकक्षाधृगुर्व्य: कूर्चशिरांसि च ।
द्वादशांगुलमानानि द्व्यंगुले मणिबन्धने ॥ ७६ ॥

गुल्फौ च स्तनमूले च त्र्यंगुलं जानु कूर्परम् ।
अपानवस्तिहृन्नाभिनीलास्सीमन्तमातृका: ॥ ७७ ॥

कूर्चशृंगाटमन्याश्च त्रिंशदेकेन वर्जिता: ।
आत्मपाणितलोन्मानाश्शेषाण्यर्धांगुलानि च ॥ ७८ ॥

तृष्णाकम्पभ्रमोन्मादा वैकल्यं मृतिरेव वा ।
मर्मच्छेदे भवन्त्यस्मात् क्षाराग्नी तत्र वर्जयेत् ॥ ७९ ॥

अभर्मवेधे वा रक्तं यदि स्यादतिनिस्रुतम् ।
सद्यो हन्यादन्यथा तु जीवेत्क्षतशतैरपि ॥ ८०॥
जीवितं प्राणिनां रक्ते तिष्ठत्येव हि तिष्ठति ।
तत्र स्नेहप्रधानैस्तु शीतैर्वाताविरोधिभिः ॥ ८१॥
पानलेपनसेकाद्यैर्युक्त्या धीमानुपाचरेत् ।
पक्वाशयकटीसक्थिश्रोत्रास्थिस्पर्शनेन्द्रियम् ॥ ८२॥
स्थानं वातस्य तत्रापि पक्वाधानं विशेषतः ।
उत्साहोच्छ्वासनिश्वासचेष्टावेगप्रवर्तनैः ॥ ८३॥
सम्यग्गत्या च धातूनामक्षाणां पाटवेन च ।
अनुगृह्णात्यविकृतो वृद्धस्यास्य तु लक्षणम् ॥ ८४॥
कार्श्यकार्ष्ण्योष्णकामत्वकम्पानाहशकृद्ग्रहाः ।
बलनिद्रेन्द्रियभ्रंशप्रलापभ्रमदीनताः ॥ ८५॥
क्षीणस्य श्लेष्मवृद्ध्युक्तरोगास्सादो विसंज्ञता ।
अल्पचेष्टावचनता स्याच्च पित्तस्य तु स्मृतम् ॥ ८६॥
नाभिरामाशयस्स्वेदो लसीका रुधिरं रसः ।
दृक् स्पर्शनं विशेषेण नाभिः पक्त्यूष्मदर्शनैः ॥ ८७॥
क्षुत्तृड्रुचिप्रभामेधाधीशौर्यतनुमार्दवैः ।
अनुगृह्णात्यविकृतं वृद्धस्यास्य तु लक्षणम् ॥ ८८॥
पीतविण्मूत्रनेत्रत्वक्क्षुत्तृड्दाहाल्पनिद्रताः ।
क्षीणस्य तु प्रभाहानिर्मन्दवह्नित्वशीतता ॥ ८९॥
उरःकण्ठशिरःक्लोमपर्वाण्यामाशयो रसः ।
मेदो घ्राणञ्च जिह्वा च कफस्य सुतरामुरः ॥ ९०॥
स च स्थिरत्वस्निग्धत्वसन्धिबन्धक्षमादिभिः ।
समो रक्षति वृद्धस्य चिह्नन्त्वालस्यगौरवम् ॥ ९१॥



श्वैत्यशैत्यश्लथांगत्वश्वासकासातिनिद्रताः ।
प्रसेको वह्निसादश्च चिह्नं क्षीणस्य तु भ्रमः ॥ ९२ ॥
श्लेष्माशयानां शून्यत्वं हृद्द्रवः श्लथसन्धिता ।
रसासृङ्मांसमेदोऽस्थिमज्जशुक्लानि धातवः ॥ ९३ ॥
सप्त दूष्या मला मूत्रशकृत्स्वेदादयोऽपि च ।
प्रीणनं जीवनं लेपः स्नेहो धारणपूरणे ॥ ९४ ॥
गर्भोत्पादश्च धातूनां श्रेष्ठं कर्म क्रमात् स्मृतम् ।
क्लेदनं स्यादवष्टम्भो मलानां केशधारणम् ॥ ९५ ॥
रसो वृद्धस्तु कफवद्रक्तं रक्ताश्रयान् गदान् ।
प्लीहवीसर्पगुल्मादीन् मांसं ग्रन्थ्यर्बुदादिकान् ॥ ९६ ॥
गण्डोदरोरुस्थौल्यञ्च मेदश्चाल्पेऽपि चेष्टिते ।
श्वासं श्रमं च कुरुते स्फिक्स्तनोदरलम्बताम् ॥ ९७ ॥
अस्थ्यध्यस्थ्यधिदन्तांश्च मज्जा नेत्राङ्गगौरवम् ।
पर्वसु स्थूलमूलानि कुर्यात् कृच्छ्राण्यरूंषि च ॥ ९८ ॥
शुक्लन्त्वतिस्त्रीकामत्वं स्रावं शुक्लाश्मरीमपि ।
कुक्षावाध्मानमाटोपं गौरवं वेदनां शकृत् ॥ ९९ ॥
मूत्रन्तु वस्तेर्निस्तोदं कृतेऽप्यकृतसंज्ञताम् ।
स्वेदोऽतिस्वेददौर्गन्ध्यकण्डूरेवं च लक्षयेत् ॥ १०० ॥
दूषिकादीनपि मलान् बाहुल्यगुरुतादिभिः ।
क्षीणे रसे श्रमश्शोषो रौक्ष्यं शब्दासहिष्णुता ॥ १०१ ॥
रक्तेऽम्लशिशिरप्रीतिस्सिराशैथिल्यरूक्षते ।
मांसेऽक्षिग्लानिगण्डस्फिक्छुष्कतासन्धिवेदनाः ॥ १०२ ॥
मेदसि स्वपनं कट्याः प्लीह्नो वृद्धिः कृशाङ्गता ।
अस्थ्न्यस्थितोदश्शतनं दन्तकेशनखादिषु ॥ १०३ ॥

अस्थ्नां मज्जनि सौषिर्यं भ्रमस्तिमिरदर्शनम् ।
शुक्रे चिरात् प्रसिच्येत शुक्रं शोणितमेव वा ॥ १०४

तोदोऽत्यर्थं वृषणयोर्मेढ्रं धूमायतीव च ।
पुरीषे वायुरान्त्राणि सशब्दो वेष्टयन्निव ॥ १०५

कुक्षिं भ्रमति यात्यूर्ध्वं हृत्पार्श्वे पीडयन् भृशम् ।
मूत्रेऽल्पं मूत्रयेत् कृच्छ्राद्विवर्णं सास्रमेव वा ॥ १०६

स्वेदे रोमच्युतिस्तब्धरोमता स्फुटनं त्वचः ।
मलानामतिसूक्ष्माणां दुर्लक्ष्यं लक्षयेत् क्षयम् ॥ १०७

स्वमलायनसंशोषतोदशून्यत्वलाघवैः ।
कुर्वतेऽभिरुचिं दोषा विपरीतसमानयोः ॥ १०८

वृद्धाः क्षीणाश्च भूयिष्ठं लक्षयन्त्यबुधा न तत् ।
रोगान् वृद्धिक्षयोद्भूतान् क्रमाल्लंघनबृंहणैः ॥ १०९

जयेदन्यत्र पवनात्तज्जांस्तिरुत्क्रमात् कृतैः ।
विशेषाद्रक्तवृद्ध्युत्थान् रक्तस्रुतिविरेचनैः ॥ ११०

मांसवृद्धिभवान् रोगान् शस्त्रक्षाराग्निकर्मभिः ।
स्थौल्यकार्श्योपचारेण मेदोजानास्थिसंक्षयात् ॥ १११

जातान् क्षीरघृतैस्तिक्तसंयुक्तैर्बस्तिभिस्तथा ।
मज्जशुक्रामयानां तु भोजनं स्वादुतिक्तकम् ॥ ११२

शुद्धिं व्यवायं व्यायामं यथान्यच्छुक्रशोधनम् ।
विड्वृद्धिजानतीसारक्रियया विट्क्षयोद्भवान् ॥ ११३

मेषाजमध्यकुल्माषयवमाषद्वयादिभिः ।
मूत्रवृद्धिक्षयोत्थांस्तु मेहकृच्छ्रचिकित्सया ॥ ११४

व्यायामाभ्यञ्जनस्वेदमद्यैः स्वेदक्षयोत्थितान् ।
अतिस्थौल्यनिरासार्थं चिन्ताशोधनजागरम् ॥ ११५



सेवेत मद्यं व्यायामं मस्तु तक्रं मधूदकम् ।
मधुना त्रिफलां लिह्यात् गुडूचीमभयां घनम् ॥ ११६ ॥

व्योषादिकं विडङ्गाद्यं यथावस्थं प्रयोजयेत् ।
बृहत्त्वार्थं मांसमद्यात् क्षीराज्यं बृंहणैर्युतम् ॥ ११७ ॥

अचिन्तया हर्षणेन ध्रुवं सन्तर्पणेन च ।
स्वप्नप्रसङ्गाच्च कृशो वराह इव पुष्यति ॥ ११८ ॥

यवगोधूममुभयोर्हितं योग्यौषधैर्युतम् ।
ओजस्तेजस्तु धातूनां शुक्रान्तानां परं स्मृतम् ॥ ११९ ॥

हृदयस्थमपि व्यापि देहस्थितिनिबन्धनम् ।
यन्नाशे नियतं नाशो यस्मिंस्तिष्ठति तिष्ठति ॥ १२० ॥

ओजोवृद्धौ तु देहस्य तुष्टिः पुष्टिर्बलोदयः ।
ओजः क्षीयेत कोपक्षुद्ध्यानशोकश्रमादिभिः ॥ १२१ ॥

बिभेति दुर्बलोऽभीक्ष्णं ध्यायति व्यथितेन्द्रियः ।
दुश्छायो दुर्मना रूक्षो भवेत् क्षामश्च तत्क्षये ॥ १२२ ॥

जीवनीयरसक्षीररसाद्यास्तत्र भेषजम् ।
प्राणादिभेदात् पञ्चात्मा वायुः प्राणोऽत्र मूर्धगः ॥ १२३ ॥

उरःकण्ठचरो बुद्धिहृदयेन्द्रियचित्तधृक् ।
ष्ठीवनक्षवथूद्गारनिश्वासान्नप्रवेशकृत् ॥ १२४ ॥

उरस्स्थानमुदानस्य नासानाभिगलांश्चरेत् ।
वाक्प्रवृत्तिप्रयत्नोर्जाबलवर्णस्मृतिक्रियः ॥ १२५ ॥

व्यानो हृदि स्थितः कृत्स्नदेहचारी महाजवः ।
गत्यवक्षेपणोत्क्षेपनिमेषोन्मेषणादिकाः ॥ १२६ ॥

प्रायस्सर्वाः क्रियास्तस्मिन् प्रतिबद्धाश्शरीरिणाम् ।
समानोऽग्निसमीपस्थः कोष्ठे चरति सर्वतः ॥ १२७ ॥

अन्नं गृह्णाति पचति विवेचयति मुञ्चति ।
अपानोऽपानगः श्रोणिवस्तिमेढ्रोरुगोचरः ॥ १२८ ॥

शुक्रार्तवशकृन्मूत्रगर्भनिष्क्रामणक्रियः ।
एतैरविकृतैर्देहस्सुखदो दुःखदोऽन्यथा ॥ १२९ ॥

हिताहारविहाराद्यैर्विकाराद्रक्ष्यतां सदा ।
अन्नादौ विगुणेऽपाने समाने मध्य इष्यते ॥ १३० ॥

व्यानेऽन्ते प्रातराशस्य सायमाशस्य तूत्तरे ।
ग्रासग्रासान्तयोरद्यादौषधं प्राणनामके ॥ १३१ ॥

मुहुर्मुहुर्विषच्छर्दिहिध्मातृट्च्छ्वासकासिषु ।
ऊर्ध्वजत्रुविकारेषु स्वप्नकाले प्रशस्यते ॥ १३२ ॥

प्रायो वातात्मका मर्त्या रूक्षदीर्घकृशाप्रियाः ।
बह्वाहारोष्णपट्वम्लस्वादुकाङ्क्षाः कलिप्रियाः ॥ १३३ ॥

चलसौहार्दधीदृष्टिचेष्टावाचश्च नास्तिकाः ।
अल्पजीवितविज्ञानसुखनिद्राः प्रलापिनः ॥ १३४ ॥

पित्तोद्रिक्तास्ताम्रकेशवक्त्रपादाल्परोमकाः ।
उष्णांगाः क्षोभरक्ताक्षा मेधावन्तोऽभिमानिनः ॥ १३५ ॥

स्वादुतिक्तकषायादाः शीताश्चाश्रितवत्सलाः ।
क्लेशासहास्तीक्ष्णतृष्णाबुभुक्षा मध्यमायुषः ॥ १३६ ॥

श्लेष्मला नीलनिबिडकेशास्सुस्निग्धलोचनाः ।
प्रलम्बबाहवः पीनवक्षसः स्निग्धरूपिणः ॥ १३७ ॥

धीरास्सत्यपराः क्लेशसहा बुद्धिबलान्विताः ।
कटुतिक्तकषायाल्पभोजना अपि सद्बलाः ॥ १३८ ॥

दृढप्रेमविरोधाश्च वदान्या मान्यमानदाः ।
सत्यस्वल्पप्रियालापाः श्रीनिवासाश्चिरायुषः ॥ १३९ ॥



तामसै राजसैस्सत्त्वप्रधानैश्च गुणैः क्रमात् ।
संयुक्ता मिश्रणे तेषां जानीयान्मिश्रिताद्गुणान ॥ १४० ॥

एवं प्रोक्तो देहकर्माङ्गभागो
विस्तारस्स्यात् ग्रन्थकोट्याप्यपूर्णः ।
देहे त्वस्मिन् प्राप्तमात्रे विकारे
कुर्याद्युक्त्या शोधनाद्यैश्चिकित्साम् ॥ १४१ ॥

इत्यङ्गविज्ञानकल्पो नामा-
ष्टमोऽध्यायः ॥

---

# नवमोऽध्यायः ।

---

## स्नेहस्वेदकल्पः ।

---

॥ अथातः स्नेहस्वेदकल्पं व्याख्यास्यामः ॥

गुरुशीतसरस्निग्धमन्दसूक्ष्ममृदुद्रवम् ।
औषधं स्नेहनं प्रायो विपरीतं विरूक्षणम् ॥ १ ॥

सर्पिर्मज्जा वसा तैलं स्नेहेषु प्रवरं मतम् ।
घृतं बहूपयोगेन गुरु चापि यथोत्तरम् ॥ २ ॥

द्वाभ्यां त्रिभिश्चतुर्भिस्तैर्यमकस्त्रिवृतो महान् ।
स्वेद्यसंशोध्यमद्यस्त्रीव्यायामासक्तचिन्तकाः ॥ ३ ॥

वृद्धबालाबलकृशा रूक्षाः क्षीणास्त्ररेतसः ।
वातार्तस्यन्दतिमिरदारुणप्रतिबोधिनः ॥ ४ ॥

स्नेह्या न त्वतिमन्दाग्नितीक्ष्णाग्निस्थूलदुर्बलाः ।
ऊरुस्तम्भातिसारामगळरोगगरोदरैः ॥ ५॥

मूर्छाच्छर्दरुचिश्लेष्मतृष्णामद्यैश्च पीडिताः ।
अपप्रसूता युक्ते च नस्ये वस्तौ विरेचने ॥ ६॥

ऋतौ साधारणे स्नेहश्शस्तोऽह्नि विमले पुनः ।
शीते तैलं माधवे चेत् घृतं निश्येव शस्यते ॥ ७॥

युक्त्यावचारयेत् स्नेहं भक्ष्याद्यन्येन वस्तिभिः ।
तत्राच्छपानं श्रेष्ठं स्यात् स्नेहकर्माशुसाधनात् ॥ ८॥

नस्याभ्यञ्जनगण्डूषमूर्धकर्णाक्षितर्पणैः ।
द्वाभ्यां चतुर्भिरष्टाभिर्यामैर्जीर्यन्ति याः क्रमात् ॥ ९॥

हृस्वमध्योत्तमा मात्रास्तास्ताभ्यश्च हृसीयसीम् ।
कल्पयेद्वीक्ष्य दोषादीन् प्रागेव तु हृसीयसीम ॥ १०॥

ह्यस्तने जीर्ण एवान्ने स्नेहोऽच्छश्शुद्धये बहुः ।
शमनः क्षुद्वतोऽनन्नो मध्यमात्रश्च शस्यते ॥ ११॥

बृंहणो रसमद्याद्यैस्सभक्तोऽल्पो हितस्स च ।
प्राङ्मध्योत्तरभक्तोऽसावधोमध्योर्ध्वदेहजान् ॥ १२॥

व्याधीन् जयेद्बलं कुर्यादंगानां च यथाक्रमम ।
वार्युष्णमच्छेऽनुपिबेत् स्नेहे तत्सुखपक्तये ॥ १३॥

आस्योपलेपशुद्ध्यै च तौरवारुष्करे न तु ।
जीर्णाजीर्णविशङ्कायां पुनरुष्णोदकं पिबेत् ॥ १४॥

भोज्योऽन्नं मात्रया पास्यन् श्वः पिबन् पीतवानपि ।
द्रवोष्णमनभिष्यन्दि नातिस्निग्धमसङ्करम् ॥ १५॥

उष्णोदकोपचारी स्यात् ब्रह्मचारी क्षपाशयः ।
न वेगरोधी व्यायामक्रोधशोकहिमातपान् ॥ १६॥



प्रवातयानयानाध्वभाष्यात्यासनसंस्थितीः ।
नीचात्युच्चोपधानाहस्स्वप्नधूमरजांसि च ॥ १७ ॥

यान्यहानि पिबेत्तानि तावन्त्यन्यान्यपि त्यजेत् ।
सर्वकर्मस्वयं प्रायो व्याधिक्षीणेषु च क्रमः ॥ १८ ॥

त्र्यहमच्छं मृदौ कोष्ठे क्रूरे सप्तदिनं पिबेत् ।
सम्यक्स्निग्धोऽथवा यावदतः सात्मी भवेत् परम् ॥ १९ ॥

वातानुलोम्यं दीप्तोऽग्निर्वर्चः स्निग्धमसंहतम् ।
स्नेहोद्वेगः क्लमः सम्यक्स्निग्धे रूक्षे विपर्ययः ॥ २० ॥

अतिस्निग्धे तु पाण्डुत्वं घ्राणवक्त्रगुदस्रवाः ।
अमात्रयाहितोऽकाले मिथ्याहारविहारतः ॥ २१ ॥

स्नेहः करोति शोफार्शस्तन्द्रास्तम्भविसंज्ञताः ।
कण्डूकुष्ठज्वरोत्क्लेशशूलानाहभ्रमादिकान् ॥ २२ ॥

क्षुत्तृष्णोल्लेखनस्वेदरूक्षपानान्नभेषजम् ।
तक्रारिष्टखळोद्दाळयवश्यामाककोद्रवाः ॥ २३ ॥

पिप्पलीत्रिफलाक्षौद्रपथ्यागोमूत्रगुल्गुलून् ।
यथास्वं प्रतिरोगश्च स्नेहव्यापदि साधनम् ॥ २४ ॥

मांसळा मेदुरा भूरिश्लेष्माणो विषमाग्नयः ।
स्नेहोचिताश्च ये स्नेह्यास्तान् पूर्वं रूक्षयेत्ततः ॥ २५ ॥

संस्नेह्य शोधयेदेवं स्नेहव्यापन्न जायते ।
बालवृद्धादिषु स्नेहपरिहारासहिष्णुषु ॥ २६ ॥

स्नेहार्थं सघृतां पेयां सस्नेहं तिलचूर्णकम् ।
क्षीरपेयां घृतैरुष्णां फाणितं कृसरां च वा ॥ २७ ॥

सगुडं मस्तु वा दद्यात् तथा स्नेहं पटूत्कटम् ।
वाते वातोत्तरे रोगे रूक्षिताङ्गेऽपि वा बहिः ॥ २८ ॥

स्नेहैस्सेकं प्रकुर्वीत सत्तदौषधसाधितैः ।
सप्ताहं द्विगुणं वापि त्रिगुणं वा यथोचितम् ॥ २९ ॥
शाययित्वाथ खट्वायां रोगिणं कृतमङ्गलम् ।
कोष्णस्नेहप्लुतैश्चेलखण्डैर्मुष्ट्या प्रसेचयेत् ॥ ३० ॥
यामार्द्धमंगे देहे वा स्नातः कोष्णोदकैस्ततः ।
भजन् पूर्वोक्तमाचारं त्यक्तरोगस्सुखी भवेत् ॥ ३१ ॥
अभ्यङ्गसेकपिचवो वस्तिश्चेति चतुर्विधम् ।
मूर्धतैलं गुणोत्कृष्टं तद्विद्यादुत्तरोत्तरम् ॥ ३२ ॥
तत्राभ्यङ्गः प्रयोक्तव्यो रौक्ष्यकण्डूमलादिषु ।
अरूषिकाशिरस्तोददाहपाकव्रणेषु तु ॥ ३३ ॥
परिषेकः पिचुः केशशातस्फुटनधूपने ।
नेत्रे स्तब्धे च वस्तिस्तु प्रसुप्त्यार्दितजागरे ॥ ३४ ॥
नासास्यशोषे तिमिरे शिरोरोगे च दारुणे ।
तत्रोत्तानं शयानस्य ललाटमनुलम्बिते ॥ ३५ ॥
पात्रे रोगिकनिष्ठाग्रप्रवेशच्छिद्रमध्यके ।
छिद्राधोलंबितमृदुनवांगुलपिचौ दृढे ॥ ३६ ॥
आढकप्रमिते युक्तं स्नेहमापूर्य सेचयेत् ।
पिचुबद्धललाटस्य बहिर्बन्धात् प्रचालयन् ॥ ३७ ॥
पिच्वग्रं शंखयोर्मध्ये शिरोदेशे यथासुखम् ।
ललाटपिच्वन्तरं स्यादेकद्वित्र्यङ्गुलोन्मितम् ॥ ३८ ॥
वातादिकोपे पात्रञ्चैस्सिक्तेनापूरयेन्मुहुः ।
तक्रक्षीरादिना मूर्धसेकेऽप्येवं क्रियाक्रमः ॥ ३९ ॥
कचान्ते चेलखण्डेन वेष्टितस्य सुखं पिचून् ।
तैलाक्तानतिस्रावान् सप्त च द्वादशाङ्गुलान् ॥ ४० ॥



मात्रासहस्रान्तरितमेकैकं मूर्ध्नि धारयेत् ।
शुद्धात्तस्विन्नदेहस्य दिनान्ते गव्यमाहिषम् ॥ ४१ ॥
द्वादशांगुलविस्तीर्णं चर्मपट्टं शिरस्समम् ।
आकर्णबन्धनस्थानं ललाटे वस्त्रवेष्टिते ॥ ४२ ॥
चैलवेणिकया बध्वा माषकल्केन लेपयेत् ।
ततो यथाव्याधि शृत स्नेहं कोष्णं निषेचयेत् ॥ ४३ ॥
ऊर्ध्वं केशभुवो यावद्‌व्यङ्गुलं धारयेच्च तत् ।
आवक्त्रनासिकोत्क्लेदाद्दशाष्टौ षट् चलादिषु ॥ ४४ ॥
मात्रासहस्राण्यरुजे त्वेकं स्कन्धादि मर्दयेत् ।
मुक्तस्नेहस्य परमं सप्ताहं तस्य सेवनम् ॥ ४५ ॥
सुखासीनस्य कल्प्याः स्युरभ्यंगपिचुवस्तयः ।
धारयेत् पूरणं कर्णे कर्णमूलं विमर्दयेत् ॥ ४६ ॥
रुजाया मार्दवं यावन्मात्राशतमवेदने ।
यावत् पर्येति हस्ताग्रं दक्षिणं जानुमण्डलम् ॥ ४७ ॥
निमेषोन्मेषमात्रेण समं मात्रा तु सा स्मृता ।
चिरायुस्सुकुमाराङ्गो जराहीनो दृढेन्द्रियः ॥ ४८ ॥
दीप्ताग्निश्शुद्धकोष्ठश्च स्नेहाभ्यासी भवेज्जनः ।
स्वेदस्तापोपनाहोष्मद्रवभेदाच्चतुर्विधः ॥ ४९ ॥
तापोऽग्नितप्तवसनफालहस्ततलादिभिः ।
उपनाहो वचाकिण्वशताह्वादेवदारुभिः ॥ ५० ॥
धान्यैस्समस्तैर्गन्धैश्च रास्नैरण्डजटामिषैः ।
उद्रिक्तलवणैः स्नेहशुक्ततक्रपयःप्लुतैः ॥ ५१ ॥
केवले पवने श्लेष्मसंसृष्टे सुरसादिभिः ।
पित्तेन पद्मकाद्यैस्तु चर्मपट्टदलादिना ॥ ५२ ॥

बद्धं रात्रौ दिवा मुञ्चेन्मुञ्चेद्रात्रौ दिवाकृतम् ।
ऊष्मा तु काञ्चिकादीनामूष्मणा विविधौषधैः । ॥ ५३ ॥
पक्वानां विविधोपायं तत्तद्व्याधिप्रकल्पितैः ।
द्रवे च वाससाच्छाद्य स्निग्धं सिञ्चेद्यथासुखम् ॥ ५४ ॥
धान्याम्लैर्वातजित्तोयैर्गलन्त्यादिपरिस्रुतैः ।
तैरेव वा द्रवैः पूर्णं कुण्डं सर्वांगगेऽनिले ॥ ५५ ॥
अवगाह्यातुरस्तिष्ठेदर्शःकृच्छ्रादिरुक्षु च ।
निवातेऽन्तर्बहिः स्निग्धो जीर्णान्नः स्वेदमाचरेत् ॥ ५६ ॥
व्याधिव्याधितदेशर्तुवशान्मध्यवरावरम् ।
कफार्तो रूक्षणं रूक्षो रूक्षस्निग्धं कफानिले ॥ ५७ ॥
आमाशयगते वायौ कफे पक्वाशयाश्रिते ।
रूक्षपूर्वं तथा स्निग्धपूर्वं स्थानानुरोधतः ॥ ५८ ॥
अल्पं वंक्षणयोस्स्वल्पं दृङ्मुष्कहृदये न वा ।
शीतशूलक्षये स्विन्नो जातेऽङ्गानां च मार्दवे ॥ ५९ ॥
स्याच्छनैर्मृदितः स्नातस्ततः स्नेहविधिं भजेत् ।
पित्तास्रकोपस्तृण्मूर्च्छास्वरांगसदनभ्रमाः ॥ ६० ॥
सन्धिपीडाज्वरश्यावरक्तमण्डलदर्शनम् ।
स्वेदातियोगाच्छर्दिश्च तत्र स्तम्भनमौषधम् ॥ ६१ ॥
विषक्षाराग्न्यतीसारच्छर्दिमोहातुरेषु च ।
स्वेदनं गुरुतीक्ष्णोष्णं प्राय स्तम्भनमन्यथा ॥ ६२ ॥
न स्वेदयेदतिस्थूलरूक्षदुर्बलमूर्च्छितान् ।
स्तम्भनीयक्षतक्षीणक्षाममद्यविकारिणः ॥ ६३ ॥
तिमिरोदरवीसर्पकुष्ठशोषाढ्यरोगिणः ।
पीतदुग्धदधिस्नेहमधून् कृतविरेचनान् ॥ ६४ ॥



भ्रष्टदग्धगुदग्लानिक्रोधशोकभयार्दितान् ।
क्षुत्तृष्णाकामलापाण्डुमेहिनः पित्तपीडितान् ॥ ६५ ॥
गर्भिणीं पुष्पितां सूतां मृदु चात्ययिके गदे ।
श्वासकासप्रतिश्यायहिध्माध्मानविबन्धिषु ॥ ६६ ॥
स्वरभेदानिलव्याधिश्लेष्मामस्तम्भगौरवे ।
महत्त्वे मुष्कयोः खल्यामायामे वातकण्टके ॥ ६७ ॥
मूत्रकृच्छ्रार्बुदग्रन्थिशुक्राघाताढ्यमारुते ।
स्वेदं यथायथं कुर्यात्तदौषधविभागतः ॥ ६८ ॥
स्वेदो हितस्त्वनाग्नेयो वाते मेदःकफावृते ।
आयामावातगृहभीसुराप्रावरणादिभिः ॥ ६९ ॥

स्नेहक्लिन्नाः कोष्ठगा धातुगा वा
स्रोतोलीना ये च शाखास्थिसंस्थाः ।
दोषास्स्वेदैस्ते द्रवीकृत्य कोष्ठं
नीतास्सम्यक् शुद्धिभिर्निर्ह्रियन्ते ॥ ७० ॥

इति स्नेहस्वेदकल्पो नाम
नवमोऽध्यायः ॥

# दशमोऽध्यायः ।

---

## वमनविरेचनकल्पः ।

---

॥ अथातो वमनविरेचनकल्पं व्याख्यास्यामः ॥

कफे विदध्याद्वमनं संयोगे वा कफोल्बणे ।
देशकालादिमालोच्य विशेषेण तु वामयेत् ॥ १ ॥
नवज्वरातिसाराधःपित्तासृग्राजयक्ष्मिणः ।
कुष्ठमेहापचिग्रन्थिश्लीपदोन्मादकासिनः ॥ २ ॥
श्वासहृल्लासवीसर्पस्तन्यदोषोर्ध्वरोगिणः ।
अवाम्या गर्भिणी रूक्षः क्षुधितो नित्यदुःखितः ॥ ३ ॥
बालवृद्धकृशस्थूलहृद्रोगिक्षतदुर्बलाः ।
प्रसक्तवमथुप्लीहतिमिरक्रिमिकोष्ठिनः ॥ ४ ॥
ऊर्ध्वप्रवृत्तवाय्वस्रदत्तबस्तिहतस्वराः ।
मूत्राघात्युदरी गुल्मी दुर्वमोऽत्यग्निरर्शसः ॥ ५ ॥
उदावर्तभ्रमाष्ठीलापार्श्वरुग्वातरोगिणः ।
ऋते विषगराजीर्णविरुद्धाभ्यवहारतः ॥ ६ ॥
प्रसक्तवमथोः पूर्वे प्रायेणामज्वरोऽपि च ।
ऊर्ध्वाधश्शुद्धिभिर्वर्ज्याः सर्वैरेवं त्वजीर्णिनः ॥ ७ ॥
स्निग्धस्विन्नं यथायोग्यं मत्स्यमाषतिलादिभिः ।
पूर्वेद्युरुत्क्लिष्टकफं पूर्वाह्णे कृतमङ्गलम् ॥ ८ ॥



ईषत्स्निग्धं सघृतया पेययाल्पक्तसिद्धया ।
परितृप्तं रोगवशात् क्षीरेणेक्षुरसै रसैः ॥ ९ ॥
पाययेदथ भैषज्यं मधुसैन्धवसंयुतम् ।
ब्रह्मरुद्रादिमन्त्रेण मन्त्रितं प्राङ्मुखं भिषक् ॥ १० ॥
मुहूर्तं पालयेत् पीते तन्मनाश्छर्दयेत्ततः ।
जातप्रसेकहृल्लासो जानुतुल्यासनस्थितः ॥ ११ ॥
अप्रवृत्ते त्वङ्गुलीभ्यां नालेन मृदुनाथवा ।
गलताल्वरुजं स्पृष्ट्वा पुनर्वेगान् प्रवर्तयेत् ॥ १२ ॥
पित्तस्य दर्शनं यावच्छेदो वा श्लेष्मणो भवेत् ।
उभे पार्श्वे ललाटं च वमतश्चास्य धारयेत् ॥ १३ ॥
प्रपीडयेत्तथा नाभिं पृष्ठं च प्रतिलोमतः ।
हीनवेगः कणाधात्रीसिद्धार्थलवणोदकम् ॥ १४ ॥
पिबेत्तथा प्रवर्तन्ते कफपित्तानिलाः क्रमात् ।
चत्वारः षड्वमावष्टौ वेगा हीनान्तरोत्तमाः ॥ १५ ॥
प्रस्थार्धं प्रस्थमपि च द्विप्रस्थं मानतः क्रमात् ।
सम्यग्योगे त्वयोगे स्युः कण्डूकोठज्वरादयः ॥ १६ ॥
अतियोगे तु वमनं फेनचन्द्रकरक्तवत् ।
भ्रमस्तमो जीवरक्तनिर्गमान्मृत्युरेव वा ॥ १७ ॥
सम्यग्योगे पिबेद्धूमं भजेत् पेयादिकं क्रमम् ।
पेयां विलेपीं यूषं च रसं लघ्वोदनं पृथक् ॥ १८ ॥
अन्नादेकद्वित्रिवारं क्रमान्न्यूनादिशुद्धिमान् ।
तूलकैर्गोमयैः काष्ठैर्यथाग्निः स्यान्महाबलः ॥ १९ ॥
महांस्थिरः सर्षपचश्चौदर्योऽग्निस्तथा भवेत् ।
पथ्याचारं वदेदस्य गदितः स्नेहने तु यः ॥ २० ॥

क्षुद्रत्वाल्पकफत्वाद्यमातुरस्यौषधस्य च ।
मृदुत्वतीक्ष्णताल्पत्वाद्ययोगे कारणं स्मरन् ॥

स्निग्धस्विन्नं पुनश्चापि वामयेन्निपुणौषधैः ।
पवने नाति वमतो हृदयं यस्य पीड्यते ॥

तस्मै स्निग्धाम्ललवणान् दद्यात् पित्तकफेऽन्यथा ।
योज्योऽतिवमने रेको विरेके वमनं मृदु ॥

परिषेकावगाहाद्यैः सुशीतैः स्तम्भयेच्च तम् ।
अञ्जयेच्चन्दनोशीरैर्मन्थं लाजयवैः पिबेत् ॥

यच्चान्यच्छर्दिभैषज्यं युक्त्या तदपि योजयेत् ।
सोद्गारायां भृशं छर्द्यां मूर्वाया धान्यमुस्तयोः ॥

समधूकाञ्जनं चूर्णं लेहयेन्मधुसंयुतम् ।
वमतोऽन्तःप्रविष्टायां जिह्वायां कवळग्रहः ॥

स्निग्धाम्ललवणा हृद्या यूषमांसरसा हिताः ।
फलान्यम्लानि खादेयुस्तस्याग्रेऽन्येन सीत्कृतम् ॥

निस्सृतां तु तिलद्राक्षाकल्कलिप्तां प्रवेशयेत् ।
अतियोगेन भैषज्यं जीवास्रं हरते यदि ॥

तृष्णामूर्च्छामदार्तस्य कुर्यादा मरणात् क्रियाम् ।
रक्तपित्तातिसारघ्नीं तस्याशु प्राणरक्षणीम् ॥

मृगाजमहिषादीनां सद्यस्कं जीवतामसृक् ।
पिबेत् जीवाभिसन्धानमाश्वायात्यस्य जीवितम् ॥

तदेव दर्भमृदितं रक्तं वस्तौ निषेचयेत् ।
श्यामाकाश्मर्यमधुकमूर्वोशीरैः शृतं पयः ॥

घृतमण्डाञ्जनयुतं बस्तिं वा योजयेद्धिमम् ।
जीवशोणितशङ्कायां शुक्ले वस्त्रे प्रलेपितम् ॥



कोष्णाम्भोभिः क्षाळितं तु जीवाच्छुध्यति नान्यथा ।
व्यापद्भीरुतया कर्म वमनाद्यं न च त्यजेत् ॥ ३३ ॥

अजीर्णव्यापदुक्तिस्तु निषेद्धुं न हि भोजनम् ।
कालात् कचिद्विपत्प्राप्तौ चिकित्सावगमाय यत् ॥ ३४ ॥

द्रव्याणि वमनार्हाणि वक्ष्ये रोगहराणि च ।
वमने मदनं श्रेष्ठं विरेके त्रिवृता यथा ॥ ३५ ॥

फलानि नातिपाण्डूनि न चातिहरितान्यपि ।
आदायाह्नि प्रशस्तर्क्षे मध्ये ग्रीष्मवसन्तयोः ॥ ३६ ॥

प्रमृज्य कुशमूतोळ्यां क्षिप्त्वा बध्वा प्रलेपयेत् ।
गोमयेनानु मूतोळीं धान्यमध्ये निधापयेत् ॥ ३७ ॥

मृदुभूतानि मध्विष्टगन्धानि कुशवेष्टनात् ।
निष्कृष्टानि गतेऽष्टाहे शोषयेत्तान्यथातपे ॥ ३८ ॥

तेषां ततः सुशुष्काणामुद्धृत्य फलपिप्पलीम् ।
दधिमध्वाज्यपललैर्मृदित्वा शोषयेत् पुनः ॥ ३९ ॥

ततः सुगुप्तं संस्थाप्य कार्यकाले प्रयोजयेत् ।
अथादाय ततो मात्रां जर्जरीकृत्य वासयेत् ॥ ४० ॥

शर्वरीं मधुयष्ट्या वा प्रत्यक्पुष्प्या जलेऽपि वा ।
मृदितं गाळितं तत्तु पिबेत् प्रातस्तथा वमेत् ॥ ४१ ॥

त्रिभागत्रिफलाचूर्णं प्रत्यक्पुष्प्यादिवारिणा ।
पिबेज्ज्वरारुचिष्ठीवग्रन्थ्यपच्यर्बुदोदरी ॥ ४२ ॥

हृद्दाहेऽस्रपित्ते च क्षीरं तत्पिप्पलीशृतम् ।
क्षैरेयीं वा कफच्छर्दिप्रसेकतमकेषु तु ॥ ४३ ॥

दध्युत्तरं वा दधि वा तच्छृतक्षीरसम्भवम् ।
तत्सिद्धमाज्यं लेह्यं वा लीढ्वा प्रच्छर्दयेत्सुखम् ॥ ४४ ॥

फलचूर्णयुतं राठपुष्पमाघ्राय वामयेम् ।
मण्डपेयारसादीनां तृप्तो मर्त्यो यथासुखम् ॥ ४५ ॥

फलाभावे गणप्रोक्तैरौषधैरपि वामयेत् ।

मदनमधुकलम्बानिम्बबिम्बीविशाला-
वपुसकुटचमूर्वादेवताळीकृमिघ्नम् ।
विदुलदहनचित्रा कोशवत्यौ करञ्जः
कणलवणवचैलासर्षपाश्छर्दनानि ॥ ४६ ॥

पित्ते च पित्तभूयिष्ठे कुर्याद्रोगे विरेचनम् ।
विरेकसाध्या गुल्मार्शोविस्फोटव्यङ्गकामिलाः ॥ ४७ ॥
जीर्णज्वरोदरच्छर्दिगरप्लीहहलीमकाः ।
विद्रधिस्तिमिरं काचः स्यन्दः पक्वाशयव्यथा ॥ ४८ ॥
योनिशुक्राश्रया रोगाः कोष्ठगाः क्रिमयो व्रणाः ।
वातास्रमूर्ध्वगं रक्तं मूत्राघातः शकृद्ग्रहः ॥ ४९ ॥
वम्याश्च कुष्ठमेहाद्या न तु रेच्यो नवज्वरः ।
अल्पाग्न्ययोगपित्तास्रक्षतवाय्वतिसारिणः ॥ ५० ॥
सशल्यास्थापितक्रूरकोष्ठातिस्निग्धशोषिणः ।
अथैनं वामितं भूयः स्निग्धस्विन्नं विरेचयेत् ॥ ५१ ॥
बहुपित्तो मृदुः कोष्ठः क्षीरेणापि विरिच्यते ।
प्रभूतमारुतः क्रूरःकृच्छ्राच्छ्यामादिकैरपि ॥ ५२ ॥
कषायमधुरैः पित्ते विरेकः कटुकैः कफे ।
स्निग्धोष्णलवणैर्वायावप्रवृत्तौ तु पाययेत् ॥ ५३ ॥
उष्णाम्बु स्वेदयेदस्य पाणितापेन चोदरम् ।
उत्थानेऽल्पे दिने तस्मिन् भुक्त्वान्येद्युः पुनः पिबेत् ॥ ५४ ॥



अदृढस्नेहकोष्ठस्तु पिबेदूर्ध्वं दशाहतः ।
भूयोऽप्युपस्कृततनुः स्नेहस्वेदैर्विरेचनम् ॥ ५५ ॥
यौगिकं सम्यगालोच्य स्मरन् पूर्वमतिक्रमम् ।
शकृत्पित्तकफानां हि सुखनिस्सरणं क्रमात् ॥ ५६ ॥
सम्यग्विरेचनं तत्र वमनोक्तेन योजयेत् ।
धूमवर्ज्येन विधिना क्रमेणाग्निं विवर्धयेत् । ॥ ५७ ॥
हृत्कुक्ष्यशुद्धिररुचिरुत्क्लेशः श्लेष्मपित्तयोः ।
विदाहो वातविट्सङ्गः स्यादयोगस्य लक्षणम् ॥ ५८ ॥
अजीर्णिनः श्लेष्मवतो व्रजत्यूर्ध्वं विरेचनम् ।
भूयेहृद्यं सुतीक्ष्णं वा शीताद्यैर्भेषजं पुनः ॥ ५९ ॥
स्तब्धं करोति मन्दाग्नेः कुक्ष्याध्मानाद्युपद्रवान् ।
अत्यर्थरूक्षं दीप्ताग्नेरविरेच्यैव भेषजम् ॥ ६० ॥
जीर्णं करोति श्वयथुहिध्मामूर्च्छादिकान् गदान् ।
अयोगस्त्रिविधस्त्वेवमाद्ये वमितवत्क्रिया ॥ ६१ ॥
द्वितीये वामयेत्तीक्ष्णैरौषधैः पुनरन्तिमे ।
स्नेहैः सलवणैः स्निग्धस्विन्नं संस्तरसंकरैः ॥ ६२ ॥
वर्तिभिर्बस्तिभिर्वापि हृतोद्गारं विरेचयेत् ।
अतिक्रमं स्मरन् पूर्वं सर्वानेव विरेचयेत् ॥ ६३ ॥
तत्तद्व्याधिवशात् सङ्गे तदुक्ता च प्रतिक्रिया ।
विट्पित्तकफवातेषु निस्सृतेष्वधिकं स्रवेत् ॥ ६४ ॥
निश्श्लेष्मपित्तमुदकं श्वेतं कृष्णं सलोहितम् ।
मांसधावनतुल्यं वा मेदःखण्डाभमेव वा ॥ ६५ ॥
गुदनिस्सरणं तृष्णा भ्रमो नेत्रप्रवेशनम् ।
भवन्त्यतिविरिक्तस्य तथातिवमनामयाः ॥ ६६ ॥

दीपनं ग्राहि लघु च नात्युष्णं वातहारि च ।
देयं तत्रातिवमनविहितं चापि भेषजम् ॥ ६७ ॥

स्तम्भवेपथुनिस्तोदसादोद्वेष्टार्तिमान्यदि ।
तत्र वातहरं सर्वं स्नेहस्वेदादि शस्यते ॥ ६८ ॥

त्रिदोषघ्नौषधैर्युक्ता त्रिदोषघ्नी भवेत्त्रिवृत् ।
तन्मूलं तिर्यगप्राप्तं गम्भीरानुगतं च यत् ॥ ६९ ॥

तद् गृहीत्वा त्यजेत् काष्ठं त्वचं शुष्कां निधापयेत् ।
अथ काले ततश्चूर्णं किञ्चिन्नागरसैन्धवम् ॥ ७० ॥

वातामये पिबेदम्लैः पैत्ते साज्यसितामधु ।
क्षीरद्राक्षेक्षुकाश्मर्यस्वादुस्कन्धवरारसैः ॥ ७१ ॥

कफामये पीलुरसमूत्रमद्याम्लकाञ्चिकैः ।
पञ्चकोलादिचूर्णैश्च युक्त्या युक्तं कफापहैः ॥ ७२ ॥

त्रिवृत्कल्ककषायेण साधितः ससितो हिमः ।
मधुत्रिजातसंयुक्तो लेहो हृद्यं विरेचनम् ॥ ७३ ॥

अजगन्धा तुकाक्षीरी विदारी शर्करा त्रिवृत् ।
चूर्णितं मधुसर्पिर्भ्यां लीढ्वा साधु विरिच्यते ॥ ७४ ॥

तत्तद्रोगौषधैः सार्धमेवं दद्याद्विरेचनम् ।
त्रिवृताद्यं यथाकालबलं सर्वरुजास्वपि ॥ ७५ ॥

निकुम्भकुम्भत्रिफलागवाक्षी-
स्नुक्छंखिनीनीलिनितिल्वकानि ।
शम्याककम्पिल्लकहेमदुग्धा
दुग्धं च मूत्रं च विरेचनानि ॥ ७६ ॥

बुद्धिप्रसादं बलमिन्द्रियाणां
धातुस्थिरत्वं ज्वलनस्य दीप्तिम् ।



चिराच्च पाकं वयसः करोति
संशोधनं सम्यगुपास्यमानम् ॥ ७७ ॥

इति वमनविरेचनकल्पो नाम
दशमोऽध्यायः ॥

---

# एकादशोऽध्यायः ।

---

## बस्तिकल्पः ।

---

॥ अथातो बस्तिकल्पं व्याख्यास्यामः ॥

वातोल्बणेषु दोषेषु वाते वा बस्तिरिष्यते ।
उपक्रमाणां सर्वेषामग्रणीस्त्रिविधश्च सः ॥ १ ॥

निरूहोऽन्वासनं बस्तिरुत्तरस्तेन साधयेत् ।
गुल्मानाहखुडप्लीहशुद्धातीसारशूलिनः ॥ २ ॥

जीर्णज्वरप्रतिश्यायशुक्रानिलमलग्रहान् ।
वर्ध्माश्मरीरजोनाशान् दारुणांश्चानिलामयान् ॥ ३ ॥

अनास्थाप्यास्त्वतिस्निग्धः क्षतोरस्को भृशं कृशः ।
आमातीसारवमिमान् संशुद्धो दत्तनावनः ॥ ४ ॥

श्वासकासप्रसेकार्शोहिध्माध्मानाल्पवह्नयः ।
शूनपायुः कृताहारो बद्धच्छिद्रोदकोदराः ॥ ५ ॥

कुष्ठी च मधुमेही च मासान् सप्त च गर्भिणी ।
आस्थाप्या एव चान्वास्या विशेषाद्तिवह्नयः ॥ ६ ॥
रूक्षाः केवलवातार्ता नानुवास्यास्त एव च ।
येऽनास्थाप्यास्तथा पाण्डुकामिलामेहपीनसाः ॥ ७ ॥
निरन्नप्लीहविड्भेदगुरुकोष्ठकफोदराः ।
अभिष्यन्दिकृशस्थूलक्रिमिकोष्ठाढ्यमारुताः ॥ ८ ॥
पीते विषे गरेऽपच्यां श्लीपदी गळगण्डवान् ।
आस्थाप्यं स्नेहितं स्विन्नं शुद्धं लब्धबलं पुनः ॥ ९ ॥
अन्वासनार्हं विज्ञाय पूर्वमेवानुवासयेत् ।
शीते वसन्ते च दिवा रात्रौ केचित्ततोऽन्यदा ॥ १० ॥
अभ्यक्तस्नातमुचितात् पादहीनं हितं लघु ।
अस्निग्धरूक्षमशितं सानुपानं द्रवादि च ॥ ११ ॥
कृतचङ्क्रमणं मुक्तविण्मूत्रं शयने सुखे ।
नात्युच्छ्रिते न चोच्छीर्षे संविष्टं वामपार्श्वतः ॥ १२ ॥
संकोच्य दक्षिणं सक्थि प्रसार्य च ततोऽपरम् ।
अथास्य नेत्रं प्रणयेत् स्निग्धे स्निग्धमुखं गुदे ॥ १३ ॥
उच्छ्वास्य वस्तेर्वदनं बध्वा हस्तमकम्पयन् ।
पृष्ठवंशं प्रति ततो नातिद्रुतविलम्बितम् ॥ १४ ॥
नातिवेगं न वा मन्दं सकृदेव प्रपीडयेत् ।
सावशेषं च कुर्वीत वायुः शेषे हि तिष्ठति ॥ १५ ॥
दत्ते तूत्तानदेहस्य पाणिना ताडयेत् स्फिजौ ।
तत्पार्ष्णिभ्यां तथा शय्यां पादतश्च त्रिरुत्क्षिपेत् ॥ १६ ॥
ततः प्रसारिताङ्गस्य सोपधानस्य पार्ष्णिके ।
आहन्यान्मुष्टिनाङ्गं च स्नेहेनाभ्यज्य मर्दयेत् ॥ १७ ॥



वेदनार्तमिति स्नेहो न हि शीघ्रं निवर्तते ।
योऽयः शीघ्रं निवृत्तेऽन्यः स्नेहोऽतिष्ठन्न कार्यकृत् ॥ १८ ॥
दीप्ताग्निं त्वागतस्नेहं सायाह्ने भोजयेल्लघु ।
निवृत्तिकालः परमस्त्रयो यामास्ततः परम् ॥ १९ ॥
अहोरात्रमुपेक्षेत परतः फलवर्तिभिः ।
तीक्ष्णैर्वा वस्तिभिः कुर्याद्यत्नं स्नेहनिवृत्तये ॥ २० ॥
अतिरौक्ष्याद्नागच्छन्न चेन् जाड्यादिदोषकृत् ।
उपेक्षेतैव हि ततोऽध्युषितश्च निशां पिबेत् ॥ २१ ॥
प्रातर्नागरधान्याम्भः कोष्णं केवलमेव वा ।
अन्वासयेत्तृतीयेऽह्नि पञ्चमे वा पुनश्च तम् ॥ २२ ॥
यदा वा स्नेहपक्तिः स्याद्तोऽत्युल्बणमारुतान् ।
व्यायामनित्यान् दीप्ताग्नीन् रूक्षांश्च प्रतिवासरम् ॥ २३ ॥
इति स्नेहैस्त्रिचतुरैः स्निग्धे स्रोतोविशुद्धये ।
निरूहं शोधनं युञ्ज्यादस्निग्धे स्नेहनं तनोः ॥ २४ ॥
पञ्चमेऽथ तृतीये वा दिवसे साधके शुभे ।
मध्याह्ने किञ्चिदावृत्ते प्रयुक्ते बलिमङ्गळे ॥ २५ ॥
अभ्यक्तस्वेदितोत्सृष्टमलं नातिबुभुक्षितम् ।
अवेक्ष्य पुरुषं दोषभेषजादीनि चादरात् ॥ २६ ॥
वस्तिं प्रकल्पयेद्वैद्यस्तद्विद्यैर्बहुभिः सह ।
काथयेद्विंशतिपलं द्रव्यस्याष्टौ फलानि च ॥ २७ ॥
द्रव्याच्चतुर्गुणे तोये कुर्यात्तत्पादशेषितम् ।
ततः काथाच्चतुर्थांशं स्नेहं वाते तु कल्पयेत् ॥ २८ ॥
पित्ते स्वस्थे च षष्ठांशमष्टमांशं कफेऽधिके ।
सर्वत्र चाष्टमं भागं कल्काद्भवति वा यथा ॥ २९ ॥

नात्यच्छसान्द्रता वस्तेः पलमात्रं गुळस्य च ।
मधुपट्वादिशेषं च युक्त्या सर्वं तदेकतः ॥ ३०

उष्णाम्बुकुम्भीवाष्पेण तप्तं खजसमाहतम् ।
प्रक्षिप्य वस्तौ प्रणयेत् पायौ नात्युष्णशीतळम् ॥ ३१

नातिस्निग्धं न वा रूक्षं नातितीक्ष्णं न वा मृदु ।
नात्यच्छसान्द्रं नो नातिमात्रं नापटु नाति च ॥ ३

लवणं तद्वदम्लं च पठन्त्यन्ये तु तद्विदः ।
मात्रां त्रिपलिकां कुर्यात् स्नेहमाक्षिकयोः पृथक् ॥ ३

कर्षार्धं माणिमन्थस्य स्वस्थे कल्कपलद्वयम् ।
सर्वद्रवाणां साराणां पलानि दश कल्पयेत् ॥ ३

माक्षिकं लवणं स्नेहं कल्कं क्वाथमिति क्रमात् ।
आवपेत निरूहाणामेष संयोजने विधिः ॥ ३

निरूहमात्रा प्रथमे प्रकुञ्चो वत्सरे परम् ।
प्रकुञ्चवृद्धिः प्रत्यब्दं यावत् षट् प्रसृतास्ततः ॥ ३

प्रसृतं वर्धयेदूर्ध्वं द्वादशाष्टादशस्य तु ।
आसप्ततेरिदं मानं दशैव प्रसृताः परम् ॥ ३

यथायथं निरूहस्य पादो मात्रानुवासने ।
उत्तानो दत्तमात्रे तु निरूहे तन्मना भवेत् ॥ ३

कृतोपधानः संजातवेगश्चोत्कुटिकः सृजेत् ।
आगतौ परमः कालो मुहूर्तो मृत्यवे परः ॥ ३

तत्रानुलोमिकस्नेहक्षारमूत्राम्लकल्पितम् ।
त्वरितं स्निग्धतीक्ष्णोष्णं वस्तिमन्यं प्रपीडयेत् ॥ ४

विदध्यात् फलवर्तिं वा स्वेदनोत्त्रासनादि च ।
स्वयमेव निवृत्तौ तु द्वितीयो वस्तिरिष्यते ॥ ४



तृतीयोऽपि चतुर्थोऽपि यावद्वा सुनिरूढता ।
विरिक्तवच्च योगादीन् विद्यायोगे च भोजयेत् ॥ ४२ ॥

कोष्णेन वारिणा स्नाते धन्वमांसरसोदनम् ।
विकारा ये निरूढस्य भवन्ति प्रचलैर्मलैः ॥ ४३ ॥

ते सुखोष्णाम्बुसिक्तस्य यान्ति भुक्तवतः शमम् ।
अथ वातार्दितं भूयः सद्य एवानुवासयेत् ॥ ४४ ॥

सम्यग्घीनातियोगाश्च तस्य स्युः स्नेहपीतवत् ।
किञ्चित्कालं स्थितो यश्च सपुरीषो निवर्तते ॥ ४५ ॥

सानुलोमानिलस्नेहस्तत्सिद्धमनुवासनम् ।
एकं त्रीन् वा बलासे तु स्नेहवस्तिं प्रकल्पयेत् ॥ ४६ ॥

पञ्च वा सप्त वा पित्ते नवैकादश वानिले ।
पुनस्ततोऽप्ययुग्मांस्तु पुनरास्थापनं ततः ॥ ४७ ॥

कफपित्तानिलेष्वन्नं यूषक्षीररसैः क्रमात् ।
वातघ्नौषधनिष्क्वाथत्रिवृतासैन्धवैर्युतः ॥ ४८ ॥

वस्तिरेकोऽनिले स्निग्धः स्वाद्वम्लोष्णो रसान्वितः ।
न्यग्रोधादिगणक्वाथपद्मकादिसितायुतौ ॥ ४९ ॥

पित्ते स्वादुहिमौ साज्यक्षीरेक्षुरसमाक्षिकौ ।
आरग्वधादिनिष्क्वाथवत्सकादियुतास्त्रयः ॥ ५० ॥

रूक्षाः सक्षौद्रगोमूत्रास्तीक्ष्णोष्णकटुकाः कफे ।
त्रयश्च सन्निपातेऽपि दोषान् घ्नन्ति यतः क्रमात् ॥ ५१ ॥

त्रिभ्यः परं वस्तिमतो नेच्छन्त्यन्ये चिकित्सकाः ।
न हि दोषश्चतुर्थोऽस्ति पुनर्दीयेत यं प्रति ॥ ५२ ॥

उत्क्लेशनं शुद्धिकरं दोषाणां शमनं क्रमात् ।
त्रिधैव कल्पयेद्वस्तिमित्यन्येऽपि प्रचक्षते ॥ ५३ ॥

दोषौषधादिबलतः सर्वमेतत् प्रमाणयेत् ।
प्राक्स्नेह एकः पञ्चान्ते द्वादशास्थापनानि तु । ॥ ५४ ॥
सान्वासनानि कर्मैवं वस्तयस्त्रिंशदीरिताः ।
कालः पञ्चदशैकोऽत्र प्राक् स्नेहोऽन्ते त्रयस्तथा ॥ ५५ ॥
षट्पञ्चवस्त्यन्तरिता योगोऽष्टौ वस्तयोऽत्र तु ।
त्रयो निरूहाः स्नेहाश्च स्नेहावाद्यन्तयोरुभौ ॥ ५६ ॥
स्नेहवस्तिं निरूहं वा नैकमेवातिशीलयेत् ।
उत्क्लेशाग्निवधौ स्नेहान्निरूहान्मारुताद्भयम् । ॥ ५७ ॥
स्नेहयोजनयुक्त्यैवं वस्तिकर्म त्रिदोषजित् ।
ह्रस्वया स्नेहपानस्य मात्रया योजितः समः ॥ ५८ ॥
मात्रावस्तिः स्मृतः स्नेहः शीलनीयः सदाखिलैः ।
दोषघ्नो निष्परीहारो बल्यः सृष्टमलश्च सः ॥ ५९ ॥
अस्निग्धस्विन्नदेहस्य गुरुकोष्ठस्य योजितः ।
शीतोऽल्पस्नेहलवणद्रव्यमात्रो घनोऽपि वा ॥ ६० ॥
वस्तिः संक्षोभ्य तं दोषं दुर्बलत्वादनिर्हरन् ।
करोत्ययोगं तेन स्याद्वातमूत्रशकृद्ग्रहः ॥ ६१ ॥
नाभिवस्तिरुजानाहो हृल्लेपः श्वयथुर्गुदे ।
कण्डूर्देहे च वैवर्ण्यमरतिर्वह्निमार्दवम् ॥ ६२ ॥
तत्रातीसारविहितं पाचनकाथमादिशेत् ।
पूतीकपिप्पलाद्यं वा विल्वधान्यादिकं तथा ॥ ६३ ॥
फलवर्त्यस्तथा स्वेदाः कालं ज्ञात्वा विरेचनम् ।
विल्वमूलत्रिवृद्दारुयवकोलकुलत्थवान् ॥ ६४ ॥
सुरादिमूत्रवान् वस्तिर्यवान्यादियुतो हितः ।
रौक्ष्यादिना वस्तिरुद्धः पवनो मर्मपीडनम् ॥ ६५ ॥

आयुर्वेदग्रन्थावल्यां प्रथमं संपुटम् । AYURVEDIC SERIES NO 1

# हृदयप्रियः ।

'वैकत्तुपाङ्गमूत्तु' इति प्रथितयशसा शुचीन्द्रपुरस्थ वट्टप्पळ्ळिस्थानिकेन राजवैद्यपरमेश्वरशर्मणा विरचितः ।

Vol. I | MARCH 1917 | No. 2

# THE HRIDAYAPRIYA

BY LATE

Rajavaidya **Parameswara Sharmah** Old Ayurvedic Practitioner, and Palace Physician in Travancore and Cochin Author of Sukhsadhaka, (Vaidya) Ramavarmacharithra, Rajasooyaprabandhavyakhya etc.

**EDITED BY**

Pandit Punnasseri Nambi Neelakandha sarma Principal, Central Sanskrit College Malabar & Editor Vijnanachintamani' Sanskrit weekly newspaper

**PUBLISHED**

T. Neelakandha sarmah, managing proprietor, Bhaskarasarma Memorial Medical works, P. O. Vaikam.

वार्षिकं मूल्यं सार्धं रूपिकाद्वितयम् २—८—०
षाण्मासिकं तु सार्धा रूपिका १—८—०

PRINTED BY THE MANGALODAYAM CO., LTD., TRICHUR.

# आयुर्वेदग्रन्थावळी ।

इयं ग्रन्थावळी १९१७ जनुवरिमासादारभ्य प्रत्येकान्तरमासं प्रकाश्यते । सांप्रतमस्यां "हृदयप्रिय" इति केरळेषु प्रथितः कोऽप्यायुर्वेदीयग्रन्थो मुद्राप्यते । हृदयप्रियस्यास्य मुद्रापणं प्रायो वर्षैकेन सम्पूर्येतेति मन्ये । अस्य परिसमाप्तेः परमेतादृशानेतावद्वध्यमुद्रितानायुर्वेदीयग्रन्थान संपाद्य संशोध्य मुद्रापयितुमाशास्माकं महती वर्तते । विषयेस्मिन् बहवो वैद्यविद्वांसः स्वस्वसरस्वतीभण्डागारस्थैरायुर्वेदतद्व्याख्याग्रन्थैः साहाय्यमारचयितुं दत्तप्रतिज्ञा वर्तन्ते । अन्येऽप्यायुर्वेदोत्कर्षेच्छवो भिषग्विद्याविशारदास्सप्रश्रयं प्रार्थ्यन्ते यत् पूर्वोक्तया विधया साहाय्यं करणीयमिति ॥

अस्या वार्षिकमूल्यं भारतवर्षसिंहळद्वीपब्रह्मदेशवास्तव्यैः प्रापणभृतिसहितं सार्धं रूपिकाद्वितयं (२–८–०) अथवा षाण्मासिकमूल्यं सार्धां रूपिकां पुरतः समर्प्य यद्वा प्रथमसञ्चिकां वि. पि. द्वारा प्रेषयितुमनुज्ञाय सुस्पष्टतरो मुखविलासः प्रेषणीयः । इतोधिकं जिज्ञास्यते चेदधोनिर्दिष्टमुखविलासद्वारा लेखः प्रेषणीयः ॥ इति ॥

ते. नीलकण्ठशर्मा, प्रसाधकोऽध्यक्षश्च,

भास्करशर्मस्मारकवैद्यशाला

वैकं (स्यानन्दूर) ।

गुदे कोष्ठे विदाहं च मुष्कवंक्षणवेदनाम् ।
आध्मानं हृदये रोधमितश्चेतश्च धावनम् ॥ ६६ ॥
करोति तत्र चाभ्यक्तस्विन्ने वर्तिं प्रयोजयेत् ।
विल्वादिश्च निरूहः स्यात् पीलुसर्षपकल्कवान् ॥ ६७ ॥
सरळामरदारुभ्यां साधितं चानुवासनम् ।
कुर्वतो वेगसंरोधं पीडितो वातिमात्रया ॥ ६८ ॥
रौक्ष्याद्यैर्वा वायुनोर्ध्वमुत्क्षिप्तो मुखनासिकात् ।
निरेति मूर्छाहृल्लासतृड्दाहादीन् प्रवर्तयेत् ॥ ६९ ॥
मूर्छाविकारं दृष्ट्वास्य सिञ्चेच्छीताम्बुना मुखम् ।
वीजेदाक्लमनाशाच्च प्राणायामं च कारयेत् ॥ ७० ॥
पृष्ठपार्श्वोदरं मृद्यात् करैरुष्णैरधोमुखम् ।
केशेपूत्क्षिप्य धून्वीत विविधं भावयेदपि ॥ ७१ ॥
तथा वस्तिरधो याति पाययेच्चाम्लसंयुतम् ।
कुष्ठक्रमुककल्कं च वस्तिं सोऽस्यानुलोमयेत् ॥ ७२ ॥
विल्वादिपञ्चमूलेन सिद्धो वस्तिरुरःस्थिते ।
शिरस्थे नावनं कार्यं प्रच्छाद्यं सर्षपैः शिरः ॥ ७३ ॥
अतियोगेन वस्तिस्तु भवेत् कुक्षिरुजाकरः ।
विरेचनातियोगेन स तुल्याकृतिसाधनः ॥ ७४ ॥
भूरिक्षारादिमान् वस्तिः कुर्यात् पित्तास्रविस्रुतिम् ।
गुदं दहन् मोहकरस्तत्र कुर्याच्चिकित्सितम ॥ ७५ ॥
रक्तपित्तातिसारघ्नं कुम्भं द्राक्षाम्भसा पिबेत् ।
सशर्करां हिमां पेयां स्नेहवस्तौ च वक्ष्यते ॥ ७६ ॥
शीतोऽल्पो वाधिके वाते पित्तेऽत्युष्णः कफे मृदुः ।
दत्तस्तैरावृतः स्नेहो नायात्यभिभवादपि ॥ ७७ ॥

स्तम्भोरुसदनाध्मानज्वरशूलाङ्गमर्दनैः ।
पार्श्वरुग्वेष्टनैर्विद्याद्वायुना स्नेहमावृतम् ॥ ७८ ॥

वातहारिनिरूहैस्तं चिकित्सेत् सानुवासनैः ।
तृड्दाहरागसंमोहवैवर्ण्यतमकज्वरैः ॥ ७९ ॥

विद्यात् पित्तावृतं स्वादुतिक्तैस्तं वस्तिभिर्हरेत् ।
तन्द्राशीतज्वरालस्यप्रसेकारुचिगौरवैः ॥ ८० ॥

समूर्छाग्लानिभिर्विद्यात् श्लेष्मणा स्नेहमावृतम् ।
कषायतिक्तकट्वाद्यैर्वस्तिभिस्तं विरेचयेत् ॥ ८१ ॥

छर्दिमूर्छाद्यामलिङ्गैर्विद्यादत्यशनावृतम् ।
तत्र स्यात् कटुपट्वाद्यैः क्वाथैः चूर्णैश्च पाचनैः ॥ ८२ ॥

विण्मूत्रानिलसङ्गाद्यैर्ज्ञात्वा स्नेहं विडावृतम् ।
स्नेहस्वेदैर्वस्तिभिश्चाप्युदावर्तहरैर्हरेत् ॥ ८३ ॥

एवं नानाविकारेषु प्रतिकुर्याद्यथायथम् ।
परित्यक्तविकारौघः स यावत् प्रकृतिं भजेत् ॥ ८४ ॥

गुदोत्तरेण मार्गेण दत्तो वस्तिस्तथोत्तरः ।
वस्तिरोगेषु सर्वेषां योनिगर्भाशये स्त्रियाः ॥ ८५ ॥

योज्यो यन्त्रेण तत्र स्यान्मात्रा शुक्तिर्विकल्प्य वा ।
अथ स्नाताशितस्यास्य स्नेहवस्तिविधानतः ॥ ८६ ॥

ऋजोः सुखोपविष्टस्य पीठे जानुसमे मृदौ ।
हृष्टे मेढ्रे स्थिते चर्जु शनैः स्रोतोविशुद्धये ॥ ८७ ॥

सूक्ष्मां शलाकां प्रणयेत्तया शुद्धेऽनुसेवनीम् ।
आमेहनान्तं नेत्रं च निष्कम्पं गुदवत्ततः ॥ ८८ ॥

पीडितेऽनुगते स्नेहे स्नेहवस्तिक्रमो हितः ।
वस्तीननेन विधिना दद्यात्त्रींश्चतुरोऽपि वा ॥ ८९ ॥



अनुवासनवच्छेषं सर्वमेवास्य चिन्तयेत् ।
स्त्रीणामार्तवकाले तु योनिर्गृह्णात्यपावृतेः ॥ ९० ॥

विदधीत तदा तस्मादनृतावपि चात्यये ।
योनिविभ्रंशशूलेषु योनिव्यापत्स्वसृग्दरे ॥ ९१ ॥

मूत्रापत्याध्वनोर्योज्यं त्र्यङ्गुलं चतुरङ्गुलम् ।
यन्त्राग्रं मूत्ररोगेषु बालानां त्वेकमङ्गुलम् ॥ ९२ ॥

प्रकुञ्चो मध्यमा मात्रा बालानां शुक्तिरेव वा ।
उत्तानायाः शयानायाः सम्यक् संकोच्य सक्थिनी ॥ ९३ ॥

ऊर्ध्वजान्वास्त्रिचतुरानहोरात्रेण योजयेत् ।
वस्तिं त्रिरात्रमेवं च स्नेहमात्रां विवर्धयेत् ॥ ९४ ॥

त्र्यहमेव च विश्रम्य प्रणिदध्यात् पुनस्त्र्यहम् ।
योगाश्चात्र विलिख्यन्ते प्रसिद्धा वस्तिकर्मणि ॥ ९५ ॥

बलां गुळूचीं त्रिफलां सरास्नां
द्विपञ्चमूलं च पलोन्मितानि ।
अष्टौ फलान्यर्धतुलां च मांसा-
च्छागात् पचेदप्सु चतुर्थशेषम् ॥ ९६ ॥

पूतो यवानीफलबिल्वकुष्ठ-
वचाशताह्वाघनपिप्पलीनाम् ।
कल्कैर्गुळक्षौद्रयुतैः सतैलै-
र्युक्तः सुखोष्णो लवणान्वितश्च ॥ ९७ ॥

वस्तिः परं सर्वगदप्रमाथी
स्वस्थे हितो जीवनबृंहणश्च ;
वस्तौ च यस्मिन् पठितो न कल्कः
सर्वत्र दद्यादमुमेव तत्र ॥ ९८ ॥

द्विपञ्चमूलस्य रसोऽम्लयुक्तः
सच्छागमांसस्य सपूर्वपेष्यः ।
त्रिस्नेहयुक्तप्रवरो निरूहः
सर्वानिलव्याधिहरः प्रदिष्टः ॥ ९९ ॥

एरण्डमूलात्त्रिपलं पलाशात्
तथा पलांशं लघुपञ्चमूलम् ।
रास्नाबलाछिन्नरुहाश्वगन्धा-
पुनर्नवारग्वधदेवदारुः ॥ १०० ॥

फलानि चाष्टौ सलिलाढकाभ्यां
विपाचयेदष्टमशेषितेऽस्मिन् ।
वचाशताह्वाहवुषाप्रियङ्गु-
यष्टीकणावत्सकबीजमुस्तम् ॥ १०१ ॥

दद्यात् सुपिष्टं सहतार्क्ष्यशैल-
मक्षप्रमाणं लवणांशयुक्तम् ।
समाक्षिकस्तैलयुतः समूत्रो
बस्तिर्जयेद्दीपनपाचनोऽसौ ॥ १०२ ॥

जङ्घोरुपादत्रिकपृष्ठकोष्ठ-
हृद्गुह्यशूलं गुरुतां विबन्धम् ।
गुल्माश्मवर्ध्मग्रहणीगुदोत्थां-
स्तांस्तांश्च रोगान् कफवातजातान् ॥ १०३ ॥

यष्ट्याह्वलोध्राभयचन्दनैश्च
शृतं पयोऽग्र्यं कमलोत्पलैश्च ।
सशर्करं क्षौद्रयुतं सुशीतम्
पित्तामयान् हन्ति सजीवनीयम् ॥ १०४ ॥



कोशातकारग्वधदेवदारु-
मूर्वाश्वदंष्ट्राकुटचार्कपाठाः ।
पक्त्वा कुलत्थान् बृहतीं च तोये
रसस्य तस्य प्रसृता दश स्युः ॥ १०५ ॥

तान् सर्षपैलामदनैः सकुष्ठै-
रक्षप्रमाणैः प्रसृतैश्च युक्तान् ।
क्षौद्रस्य तैलस्य शताह्वयस्य
क्षारस्य तैलस्य च सार्षपस्य ॥ १०६ ॥

दद्यान्निरूहं कफरोगिताय
मन्दाग्नये चाशनविद्विषे च ।
वक्ष्ये मृदून् स्नेहकृतो निरूहान्
सुखोचितेभ्यः प्रसृतैः पृथक् तु ॥ १०७ ॥

क्षीराद्द्वौ प्रसृतौ कार्यौ मधुतैलघृतात्त्रयः
खजेन मथितो बस्तिर्वातघ्नो बलवर्णकृत् ॥ १०८ ॥

एकैकप्रसृतस्तैलप्रसन्नाक्षौद्रसर्पिषाम् ।
बिल्वादिमूलक्वाथौ द्वौ कौलत्थाद्द्वौ स वातजित् ॥ १०९ ॥

पटोलनिम्बपूतीकरास्नासप्तच्छदाम्भसः ।
प्रसृतः पृथगाज्याच्च बस्तिः सर्षपकल्कवान् ॥ ११० ॥

स पञ्चतिक्तोऽभिष्यन्दक्रिमिकुष्ठप्रमेहहा ।
चत्वारस्तैलगोमूत्रदधिमण्डाम्लकाञ्जिकान् ॥ १११ ॥

प्रसृताः सर्षपैः पिष्टैर्विट्सङ्गानाहभेदनः ।
पयस्येक्षुस्थिरारास्नाविदारीक्षौद्रसर्पिषः ॥ ११२ ॥

एकैकप्रसृतो बस्तिः कृष्णाकल्को वृषत्वकृत् ।
सिद्धबस्तीनतो वक्ष्ये सर्वदा तान् प्रयोजयेत् ॥ ११३ ॥

निर्व्यापदो बहुफलान् बलपुष्टिकरान् सुखान् ।
मधुतैले समे कर्षे सैन्धवाद्द्विपिचुर्मिसिः ॥ ११४ ॥

एरण्डमूलक्काथेन निरूहो माधुतैलिकः ।
रसायनं प्रमेहार्शःक्रिमिगुल्मान्त्रवृद्धिहृत् ॥ ११५ ॥

सयष्टीमधुकश्चैष चक्षुष्यो रक्तपित्तजित् ।
यापनो घनकल्केन मधुतैलरसाज्यवान् ॥ ११६ ॥

पायुजानूरुवृषणवस्तिमेहनशूलनुत् ।
प्रसृतांशैर्घृतक्षौद्रवसातैलैः प्रकल्पयेत् ॥ ११७ ॥

यापनं सैन्धवार्धाक्षहवुषार्धपलान्वितम् ।
एरण्डमूलनिष्काथो मधुतैलंससैन्धवम् ॥ ११८ ॥

एष युक्तरथो वस्तिः सवचापिप्पलीफलः ।
सक्वाथो मधुषड्ग्रन्थाशताह्वाहिंगुसैन्धवम् ॥ ११९ ॥

देवदारु च रास्ना च वस्तिर्दोषहरः शिवः ।
पञ्चमूलस्य निष्काथस्तैलं मागधिका मधु ॥ १२० ॥

ससैन्धवः समधुकः सिद्धवस्तिरिति स्मृतः ।
स्नेहांश्चायन्त्रणान् सिद्धान् सिद्धद्रव्यैः प्रकल्पयेत् ॥ १२१ ॥

दोषघ्नाः सपरीहारा वक्ष्यन्ते स्नेहवस्तयः ।
दशमूलं बलां रास्नामश्वगन्धां पुनर्नवम् ॥ १२२ ॥

गुडूच्येरण्डपूतीकभार्ङ्गीवृक्षकरोहिषम् ।
शतावरीं सहचरं काकनासां पलांशिकम् ॥ १२३ ॥

यवमाषातसीकोलकुलत्थान् प्रसृतोन्मितान् ।
वहे विपाच्य तोयस्य द्रोणशेषेण तेन च ॥ १२४ ॥

पचेत्तैलाढकं पेष्यैर्जीवनीयैः पलोन्मितैः ।
अनुवासनमित्येतत्सर्ववातविकारनुत् ॥ १२५ ॥



आनूपानां वसा तद्वज्जीवनीयोपसाधिता ।
शताह्वायवबिल्वाम्लैस्तैलं सिद्धं समीरणे ॥ १२६ ॥

सैन्धवेनाग्निवर्णेन तप्तं चानिलजिद्घृतम् ।
जीवन्तीं मदनं मेदां श्रावणीं मधुकं बलाम् ॥ १२७ ॥

शताह्वर्षभकौ कृष्णां काकनासां शतावरीम् ।
स्वगुप्तां क्षीरकाकोलीं कर्कटाख्यां षडीं वचाम् ॥ १२८ ॥

पिष्ट्वा तैलं घृतं क्षीरे साधयेत चतुर्गुणे ।
बृंहणं वातपित्तघ्नं बलशुक्राग्निवर्धनम् ॥ १२९ ॥

रजश्शुक्रामयहरम् पुत्रीयं चानुवासनम् ।
सैन्धवं मदनं कुष्ठं शताह्वा निचुळो वचा ॥ १३० ॥

ह्रीबेरं मधुकं भार्ङ्गी देवदारु सकट्फलम् ।
नागरं पुष्करं मेदा चविका चित्रकष्षडी ॥ १३१ ॥

विळङ्गातिविषा श्यामा हरेणुर्नीलिनी स्थिरा ।
बिल्वाजमोजा चपला दन्ती रास्ना च तैः समैः ॥ १३२ ॥

साध्यमेरण्डजं तैलं तैलं वा कफरोगनुत् ।
वर्ध्मोदावर्तगुल्मार्शःप्लीहमेहाढ्यमारुतान् ॥ १३३ ॥

आनाहमश्मरीं चाशु हन्यात्तदनुवासनम् ।
साधितं पञ्चमूलेन तैलं बिल्वादिनाथवा ॥ १३४ ॥

कफघ्नं कल्पयेत्तैलं द्रव्यैर्वा कफघातिभिः ।
फलैरष्टगुणैश्चाम्लैः सिद्धमन्वासनं हितम् ॥ १३५ ॥

बलकालरोगदोषप्रकृतीः प्रविभज्य योजितो वस्तिः ।
स्वैः स्वैरौषधवर्गैः कृच्छ्रान् रोगान्निवर्तयति ॥ १३६ ॥

इति हृदयप्रिये वस्तिकल्पो नाम
एकादशोऽध्यायः ।

——

# द्वादशोऽध्यायः ।

---

## नस्यादिकल्पः ।

---

॥ अथातो नस्यादिकल्पं व्याख्यास्यामः ॥

हितं जत्रूर्ध्वरोगेषु नस्यं नासा हि तत्सृतिः ।
विरेचनं शिरःशूलजाड्यस्यन्दगलामये ॥ १ ॥
शोफगण्डक्रिमिग्रन्थिकुष्ठापस्मारपीनसे ।
बृंहणं वातजे शूले सूर्यावर्ते स्वरक्षये ॥ २ ॥
नासास्यशोषे वाक्सङ्गे कृच्छ्रोन्मीलेऽवबाहुके ।
शमनं नीलिकाव्यङ्गकेशदोषाक्षिरोगिषु ॥ ३ ॥
स्नेहचूर्णरसैस्तत्तु कुर्याद्युक्त्या प्रकल्पितैः ।
मर्शश्च प्रतिमर्शश्च द्विधा स्नेहोऽत्र मात्रया ॥ ४ ॥
प्रदेशिन्यङ्गुलीपर्वद्वयान्मग्नसमुद्धृतात् ।
यावत् पतत्यसौ बिन्दुर्दशाष्टौ षट् क्रमेण ते ॥ ५ ॥
मर्शस्योत्कृष्टमध्योना मात्रास्ता एव च क्रमात् ।
बिन्दुद्वयोनाः कल्कादेः प्रतिमर्शो द्विबिन्दुकः ॥ ६ ॥
आजन्ममरणं शस्तः शीलितो मर्शकार्यकृत् ।
प्रातः श्लेष्मणि मध्याह्ने पित्ते सायन्निशोश्चले ॥ ७ ॥
स्वस्थवृत्तौ तु पूर्वाह्णे सायंप्रातः स्वरक्षये ।
मन्यास्तम्भे च हिध्मायां वाताक्रान्ते च मूर्धनि ॥ ८ ॥



एकाहान्तरमन्यत्र सप्ताहं च तदाचरेत् ।
स्निग्धस्विन्नं निवातस्थं जत्रूर्ध्वं स्वेदयेत् पुनः ॥ ९ ॥
अथोत्तानर्जुदेहस्य पाणिपादे प्रसारिते ।
किञ्चिदुन्नतपादस्य किञ्चिन्मूर्धनि नामिते ॥ १० ॥
नासापुटं पिधायैकं पर्यायेण निषेचयेत् ।
उष्णाम्बुतप्तं भैषज्यं प्रणाड्या पिचुनाथवा ॥ ११ ॥
दत्ते पादतलस्कन्धहस्तकर्णादि मर्दयेत् ।
किञ्चिद्विलम्ब्य निष्ठीवेत् शनैरुच्छिङ्घ्य पार्श्वयोः ॥ १२ ॥
मूर्छायां शीततोयेन सिञ्चेत् परिहरञ्छिरः ।
न कुर्यात् स्नातुकामे च स्नाते भुक्ते स्रुतासृजि ॥ १३ ॥
तोयमद्यगरस्नेहपीतानां पातुमिच्छताम् ।
नवपीनसवेगार्तसूतिकाश्वासकासिनाम् ॥ १४ ॥
शुद्धानां दत्तवस्तीनां दुर्दिने चात्ययो न चेत् ।
सिद्धेऽक्षपाटवं श्वाससुखमस्वास्थ्यमन्यथा ॥ १५ ॥
स्निग्धरूक्षादि चालोच्य पुनः कुर्याद्यथासुखम् ।
न नस्यमूनसप्ताब्दे नातीताशीतिवत्सरे ॥ १६ ॥
जीवन्तीजलदेवदारुजलदत्वक्सेव्यगोपीहिमं
दार्वीत्वङ्मधुकप्लवागुरुवरीपुण्ड्राह्वबिल्वोत्पलम् ।
धावन्यौ सुरभि स्थिरे क्रिमिहरं पत्रं त्रुटीं रेणुकां
किञ्जल्कं कमलाद्बलां शतगुणे दिव्येऽम्भसि क्वाथयेत् ॥ १७ ॥

तैलाद्रसं दशगुणं परिशेष्य तेन
तैलं पचेत सलिलेन दशैव वारान् ।
पाके क्षिपेच्च दशमे सममाजदुग्धं
नस्यं महागुणमुशन्त्यणुतैलमेतत् ॥ १८ ॥

घनोन्नतप्रसन्नत्वक्स्कन्धग्रीवास्यवक्षसः ।
दृढेन्द्रियास्त्वपलिता भवेयुर्नस्यशीलिनः ॥ १९ ॥

अत्रूर्ध्वकफवातोत्थे रोगे धूमं पिबेत् सदा ।
स्निग्धं मध्यं सुतीक्ष्णं च वाते वातकफे कफे ॥ २० ॥

क्षुतजृम्भितविण्मूत्रस्त्रीसेवाशस्त्रकर्मणाम् ।
हासस्य दन्तकाष्ठस्य धूममन्ते पिबेन्मृदुम् ॥ २१ ॥

कालेष्वेषु निशाहारनावनान्ते च मध्यमम् ।
निद्रानस्याञ्जनस्नानच्छर्दितान्ते विरेचनम् ॥ २२ ॥

द्रव्याणि गुग्गुल्वगरुमुस्तास्थौणेयवालकम् ।
वराङ्गसेव्ययष्ट्यादि वातघ्नं मृदु चादिमे ॥ २३ ॥

आज्यादिस्नेहभूयिष्ठं शमने सल्लकीजतु ।
चतुस्त्वचः सिता लोध्रं पृथ्वीका कमलोत्पलम् ॥ २४ ॥

यष्टीमधुसुवर्णत्वक् पद्मकं रक्तयष्टिका ।
गन्धाश्च कुष्ठतगरा तीक्ष्णज्योतिष्मती निशा ॥ २५ ॥

दशमूलमनोह्वाललाक्षाः श्वेता फलत्रयम् ।
गन्धद्रव्याणि तीक्ष्णानि गणो मूर्धविरेचनः ॥ २६ ॥

इषीकादि पञ्चकृत्वः पिष्टैरेतैः प्रलेपयेत् ।
वर्तिरङ्गुष्ठकस्थूला यथा स्याद्द्वादशाङ्गुला ॥ २७ ॥

छायाशुष्कां विगर्भां तां सस्नेहां समये पिबेत् ।
पिबेद्यन्त्रार्पितं धूमं सुखासीनः त्रिपर्ययम् ॥ २८ ॥

प्राक् पिबेन्नासयोत्क्लिष्टे दोषे घ्राणशिरोगते ।
पिधाय छिद्रमेकैकं वक्त्रेणोत्क्लेशनाय च ॥ २९ ॥

कण्ठगे विपरीतं स्यान्मुखेनैवोद्वमेदथ ।
योग्यो न रक्तपित्तार्तितिमिरोदरमेहिषु ॥ ३० ॥



शिरस्यभिहते पाण्डुरोगे जागरिते निशि ।
रक्तपित्तान्ध्यबाधिर्यतृण्मूर्छामदमोहकृत् ॥ ३१ ॥

धूमोऽकालेऽति पीतो वा तत्र शीतो विधिर्हितः ।

कासः श्वासः पीनसो विस्वरत्वं
पूतिर्गन्धः पाण्डुता केशदोषः ।
कर्णास्याक्षिस्रावकण्डूर्तिजाड्यं
तन्द्रा हिध्मा धूमपं न स्पृशन्ति ॥ ३२ ॥

चतुष्प्रकारो गण्डूषः स्निग्धः शमनशोधनौ ।
रोपणश्च त्रयस्तत्र त्रिषु योज्याश्चलादिषु ॥ ३३ ॥

अन्त्यो व्रणघ्नः स्निग्धोऽत्र स्वाद्वम्लपटुसाधितैः ।
स्नेहैः संशमनस्तिक्तकषायमधुरौषधैः ॥ ३४ ॥

शोधनस्तिक्तकट्वम्लपटूष्णै रोपणः पुनः ।
कषायतिक्तकैस्तत्र स्नेहक्षीरमधूदकम् ॥ ३५ ॥

शुक्तं मद्यं रसं मूत्रं धान्याम्लं च यथायथम् ।
कल्कैर्युक्तं विपक्वं वा यथास्पर्शं प्रयोजयेत् ॥ ३६ ॥

दन्तहर्षे दन्तचाले मुखरोगे च वातिके ।
सुखोष्णमथ शीतं वा तिलकल्कोदकं हितम् ॥ ३७ ॥

क्षारक्षतोपदाहादौ सर्पिर्धार्यं पयोऽथवा ।
वैशद्यार्थं रोपणार्थं तृष्णाशान्त्यै हितं मधु ॥ ३८ ॥

धान्याम्लमास्यवैरस्यमलदौर्गन्ध्यनाशनम् ।
तदेवालवणं शीतं मुखशोषहरं परम् ॥ ३९ ॥

आशु क्षाराम्बुगण्डूषो भिनत्ति श्लेष्मणश्चयम् ।
आसञ्चार्यो मुखे पूर्णे गण्डूषः कवलोऽन्यथा ॥ ४० ॥

कफपूर्णास्यता यावत् *स्रवद्घ्राणाक्षिताथवा ।
मन्याशिरःकर्णमुखाक्षिरोगाः
प्रसेककण्ठामयवक्त्रशोषाः ।
हृल्लासतन्द्रारुचिपीनसाश्च
साध्या विशेषात् कवळग्रहेण ॥ ४१ ॥
सर्वेषामक्षिरोगाणामादावाश्चयोतनं हितम् ।
रुक्तोदकण्डूघर्षाश्रुदाहरागनिबर्हणम् ॥ ४२ ॥
उष्णं वातकफे कोष्णं तच्छीतं रक्तपित्तयोः ।
उन्मीलितेऽक्षिण पिचुना ह्यङ्गुलादवसेचयेत् ॥ ४३ ॥
दश द्वादश वा बिन्दून् कनीने रक्तजे पुनः ।
शतवारं पाणितलप्रमितेनापि सेचयेत् ॥ ४४ ॥
स्तन्यक्वाथादिना शुक्तौ गृहीतेन मुहुर्मुहुः ।
अत्युष्णतीक्ष्णं रुग्रागदृङ्नाशायाक्षिसेचनम् ॥ ४५ ॥
अतिशीतं तु कुरुते निस्तोदस्तम्भवेदनाः ।
नेत्रनासास्यगान् दोषान् निर्हरेन्नयनौषधम् ॥ ४६ ॥
कफे वाते कोष्णवारिप्लुतैश्चेलैः प्रमार्जयेत् ।
अथाञ्जनं शुद्धतनोर्नेत्रमात्राश्रये मले ॥ ४७ ॥
लेखनं रोपणं दृष्टेः प्रसादनमिति त्रिधा ।
कल्पयेल्लेखनं तत्र कषायाम्लपटूषणैः ॥ ४८ ॥
रोपणं तिक्तकैर्द्रव्यैः स्वादुशीतैः प्रसादनम् ।
पिण्डो रसक्रिया चूर्णस्त्रिधैवाञ्जनकल्पना ॥ ४९ ॥
पिण्डस्य तीक्ष्णद्रव्यस्य मृदुद्रव्यकृतस्य च ।
हरेणुमात्रं द्विगुणं प्रमाणं भवति क्रमात् ॥ ५० ॥

*धार्यो वा नासिकास्रवादिति पाठभेदः ।



रसक्रियायामप्याहुर्बिल्बफलमात्रकम् ।
शलाकां द्विगुणां तीक्ष्णे चूर्णे च त्रिगुणां मृदौ ॥ ५१ ॥
दशाङ्गुला तनुर्मध्ये शलाका मुकुळानना ।
प्रशस्ता लेखने ताम्री रोपणे काळलोहजा ॥ ५२ ॥
अङ्गुली च सुवर्णोत्था रूप्यजा च प्रसादने ।
अश्मनो जन्म लोहस्य तत एव च तीक्ष्णता ॥ ५३ ॥
उपघातोऽपि तेनैव तथा नेत्रस्य तेजसः ।
तेजोऽतिसङ्गान्नयनं मध्याह्ने चेद्विपीदति ॥ ५४ ॥
प्रातः सायं च बलवत्तस्मान्नेत्रेऽञ्जयेत्तदा ।
तीक्ष्णाञ्जनं तूष्णकाले निशायामेव शस्यते ॥ ५५ ॥
तीक्ष्णाञ्जनप्रतप्तेऽक्षिण सौम्यं प्रत्यञ्जनं हितम् ।
दत्तेऽनुन्मीलयन् दृष्टी चालयेद्वर्त्मनी पुनः ॥ ५६ ॥
अपेतौषधसंरम्भं निर्वृतं नयनं यदा ।
व्याधिदोषर्तुयोग्याभिरद्भिः प्रक्षाळयेत्सुखम् ॥ ५७ ॥
नाञ्जयेद्दुःखितं शुद्धमाशितं कृतजागरम् ।
प्रतान्ताक्षं शिरःस्नातं पीतधूमं सुरातुरम् ॥ ५८ ॥
नयने तर्पणं योज्यं वातपित्तोत्तरे गदे ।
कृछ्रोन्मीलसिराहर्षसिरोत्पाततमोर्जुने ॥ ५९ ॥
स्यन्दमन्थान्यतोवातवातपर्ययशुक्रके ।
शुद्धेऽङ्गे शिरसि प्रातः सायं वोत्तानशायिनः ॥ ६० ॥
यवमाषमयीं पाळीं नेत्रकोशाद्बहिः समाम् ।
द्व्यङ्गुलोच्चां दृढां कृत्वा यथास्वं सिद्धमावपेत् ॥ ६१ ॥
सर्पिर्निमीलिते नेत्रे तप्ताम्बुप्रविलायितम् ।
नक्तान्ध्यवाततिमिरकृच्छ्रबोधादिके वसाम् ॥ ६२ ॥

आपक्ष्माग्राद्थोन्मेषं शनकैस्तस्य कुर्वतः ।
मात्रां विगणयेत्तत्र वर्त्मसन्धिसितासिते ॥ ६३ ॥

द्वष्टौ च क्रमशो व्याधौ शतं त्रीणि च पञ्च च ।
शतानि सप्त चाष्टौ च दश मन्थेऽनिले दश ॥ ६४ ॥

पित्ते षट् स्वस्थवृत्ते च बलासे पञ्च धारयेत् ।
कृत्वापाङ्गे ततो द्वारं स्नेहं पात्रे निगाळयेत् ॥ ६५ ॥

पिबेच्च धूमं नेक्षेत व्योम रूपं च भासुरम् ।
इत्थं प्रतिदिनं वायौ पित्ते त्वेकान्तरं कफे ॥ ६६ ॥

स्वस्थे च द्व्यन्तरं दद्यादातृप्तेरिति योजयेत् ।
तत्तद्रोगशमः स्वास्थ्यं तृप्तेऽतृप्ते विपर्ययः ॥ ६७ ॥

पुटपाको दृग्बलाय तर्पणानन्तरं हितः ।
स वाते स्नेहनः श्लेष्मसहिते लेखनः पुनः ॥ ६८ ॥

दृग्दौर्बल्येऽनिले पित्ते रक्ते स्वस्थे प्रसादनः ।
स्नेहनं पयसा पिष्टैर्जीवनीयैः प्रकल्पयेत् ॥ ६९ ॥

लेखनं शंखफेनायस्ताम्रसैन्धवमस्तुना ।
मधुरैः सघृतैः स्तन्यक्षीरपिष्टैः प्रसादनम् ॥ ७० ॥

ऊरुपूगवटाम्भोजपत्रैः स्निग्धादिषु क्रमात् ।
वेष्टयित्वा भेषजानां पलं पिण्डीकृतं पुनः ॥ ७१ ॥

मृदा प्रलिप्य निश्छिद्रं धवधन्वनगोमयैः ।
पक्त्वेन्धनैरथाग्न्याभे हृत्वा निष्पीड्य तद्रसम् ॥ ७२ ॥

नेत्रे तर्पणवद्दद्याच्छतं द्वे त्रीणि धारयेन् ।
लेखनस्नेहनान्त्येषु कोष्णौ पूर्वौ हिमोऽपरः ॥ ७३ ॥

धूमपोऽन्ते तयोरेव योगास्तत्र तु तृप्तिवत् ।
तर्पणं पुटपाकं वा नस्यानर्हे न योजयेत् ॥ ७४ ॥



यावन्त्यहानि युञ्जीत द्विस्ततो हितभाग्भवेत् ।

सर्वात्मना नेत्रहिताय यत्नं
कुर्वीत नस्याञ्जनतर्पणाद्यैः ।
दृष्टिश्च नष्टा विविधं जगच्च
तमोमयं जायत एकरूपम् ॥ ७५ ॥

इति हृदयप्रिये नस्यादिकल्पो नाम
द्वादशोऽध्यायः ॥

---

# त्रयोदशोऽध्यायः ।

---

## रक्तमोक्षकल्पः ।

---

॥ अथातो रक्तमोक्षकल्पं व्याख्यास्यामः ॥

मधुरं लवणं किञ्चिदशीतोष्णमसंहतम् ।
पद्मेन्द्रगोपहेमाविशशलोहितलोहितम् ॥ १ ॥

रक्तं शुद्धं वदेत्तत्तु दूष्यते श्लेष्मपित्तळैः ।
दुष्टं स्रावयितुं रक्तमुद्रिक्तं व्यधयेत्सिराम् ॥ २ ॥

न तूनषोडशातीतसप्तत्यब्दस्रुतासृजाम् ।
अस्निग्धास्वेदितात्यर्थस्वेदितानिलरोगिणाम् ॥ ३ ॥

गर्भिणीसूतिकाजीर्णपित्तासृक्छ्वासकासिनाम् ।
अतीसारोदरच्छर्दिपाण्डुसर्वाङ्गशोफिनाम् ॥ ४ ॥

स्नेहपीते प्रयुक्तेषु तथा पञ्चसु कर्मसु ।
नायन्त्रितां सिरां विध्येन्न तिर्यङ् नाप्यनुत्थिताम् ॥ ५ ॥

विकारासन्नदेशेषु प्रायेण व्यधयेत्सिराम् ।
ललाटश्रवणाद्येषु यत्नान्मर्माश्रयां त्यजेत् ॥ ६ ॥

उरोऽपाङ्गललाटस्थामुन्मादेऽपस्मृतौ पुनः ।
हनुसन्धौ समस्ते वा सिरां भ्रूमध्यगामिनीम् ॥ ७ ॥

इन्द्रवस्तेरधोऽपच्यां द्व्यङ्गुले चतुरङ्गुले ।
ऊर्ध्वं गुल्फस्य सक्थ्यर्तौ तथा क्रोष्टुकशीर्षके ॥ ८ ॥

विशेषेण सिरां विध्येदूरुगां गळगण्डके ।
तृतीयकेंऽसयोर्मध्ये स्कन्धस्याधश्चतुर्थके ॥ ९ ॥

प्रवाहिकायां शूलिन्यां श्रोणितो द्व्यङ्गुले स्थिताम् ।
अथ स्निग्धः कृतशुभः सज्जोपकरणो बली ॥ १० ॥

अग्नितापातपस्विन्नो जानूच्चासनसंस्थितः ।
मृदुपट्टात्तकेशान्तो जानुस्थापितकोर्परः ॥ ११ ॥

मुष्टिभ्यां वस्त्रगर्भाभ्यां मन्ये गाढं निपीडयेत् ।
दन्तप्रपीडनोच्छ्वासगण्डाध्मानानि चाचरेत् ॥ १२ ॥

पृष्ठतो यन्त्रयेच्चैनं वस्त्रमावेष्टयन्नरः ।
कन्धरायां परिक्षिप्य न्यस्यान्तर्वामतर्जनीम् ॥ १३ ॥

एषोऽन्तर्मुखवर्ज्यानां सिराणां यन्त्रणे विधिः ।
ततो मध्यमयाङ्गुल्या वैद्योऽङ्गुष्ठविमुक्तया ॥ १४ ॥

ताडयेदुत्थितां ज्ञात्वा स्पर्शाद्वाङ्गुष्ठपीडने ।
कुठार्या लक्षयेन्मध्ये वामहस्तगृहीतया ॥ १५ ॥

फलोद्देशे सुनिष्कम्पं सिरां तद्वच्च मोक्षयेत् ।
ताडयन् पीडयेत्त्वेनां विध्येद् व्रीहिमुखेन तु ॥ १६ ॥



अङ्गुष्ठेनोन्नमय्याग्रे नासिकामुपनासिकाम् ।
अभ्युन्नतविदष्टाग्रजिह्वस्याधस्तदाश्रयाम् ॥ १७ ॥

यन्त्रयेत् स्तनयोरूर्ध्वं ग्रीवाश्रितसिराव्यधे ।
पाषाणगर्भहस्तस्य जानुस्थे प्रसृते भुजे ॥ १८ ॥

कुक्षेरारभ्य मृदिते विध्येद्बद्धोर्ध्वपट्टके ।
विध्येद्धस्तसिरां बाहावनाकुञ्चितकोर्परे ॥ १९ ॥

बध्वा सुखोपविष्टस्य मुष्टिमङ्गुष्ठगर्भिणीम् ।
ऊर्ध्वं वेध्यप्रदेशाच्च पट्टिकां चतुरङ्गुले ॥ २० ॥

विध्येदालम्बमानस्य बाहुभ्यां पार्श्वयोः सिराम् ।
प्रहृष्टे मेहने जङ्घासिरां जानुन्यकुञ्चिते ॥ २१ ॥

पादे तु सुस्थितेऽधस्ताज्जानुसन्धेर्निपीडिते ।
गाढं कराभ्यामागुल्फं चरणे तस्य चोपरि ॥ २२ ॥

द्वितीये कुञ्चिते किञ्चिदारूढे हस्तवत्ततः ।
बध्वा विध्येत् सिरामित्थमनुक्ताङ्गेषु चाचरेत् ॥ २३ ॥

मांसळे व्रीहिनिम्नं स्यात् क्षतमङ्गेऽर्द्धमस्थिगे ।
सम्यग्विद्धे स्रवेद्धारा यन्त्रे मुक्ते तु न स्रवेत् ॥ २४ ॥

भीमूर्छायन्त्रशैथिल्यकुण्ठशस्त्रातितृप्तयः ।
क्षामत्ववेगितास्वेदा रक्तस्यास्रुतिहेतवः ॥ २५ ॥

दुर्विद्धेऽल्पं स्रवेत् कृच्छ्राधार्यं स्यादतिवेधने ।
असम्यगस्रे स्रवति वेल्लव्योषनिशान्तैः ॥ २६ ॥

सागारधूमलवणतैलैर्दिह्यात् सिरामुखम् ।
सम्यक् प्रवृत्ते कोष्णेन तैलेन लवणेन च ॥ २७ ॥

अग्रे स्रवति दुष्टास्रं कुसुम्भादिव पीतिका ।
सम्यक् स्रुत्वा स्वयं तिष्ठेच्छुद्धं तदिति नाहरेत् ॥ २८ ॥

यन्त्रं विमुच्य मूर्च्छायां वीजेत व्यजनैः पुनः ।
स्रावयेन्मूर्च्छति पुनस्त्वपरेद्युस्त्र्यहेऽपि वा ॥ २९ ॥
वाताच्छ्यावारुणं रूक्षं वेगस्राव्यच्छफेनिलम् ।
पित्तात्पीतासितं विस्रमस्कन्द्युष्णं सचन्द्रकम् ॥ ३० ॥
कफात्स्निग्धमसृक्पाण्डु तन्तुमत् पिच्छिलं घनम् ।
संसृष्टलिङ्गं संसर्गात्त्रिलिङ्गं सान्निपातिकम् ॥ ३१ ॥
अशुद्धं बलिनोऽप्यस्रं न प्रस्थात् स्रावयेत् परम् ।
अतिस्रुतौ हि मृत्युः स्याद्दारुणा वा चलामयाः ॥ ३२ ॥
तत्राभ्यङ्गरसक्षीररक्तपानादि भेषजम् ।
स्रुते रक्ते शनैर्यन्त्रमपनीय हिमाम्बुना ॥ ३३ ॥
प्रक्षाल्य तैलप्लोतान्तं बन्धनीयं सिरामुखम् ।
अशुद्धं स्रावयेत् भूयः सायमह्न्यपरेऽपि वा ॥ ३४ ॥
स्नेहोपस्कृतदेहस्य पक्षाद्वा भृशदूषितम् ।
दुष्टं प्रसादयेच्छिष्टं रक्तपित्तीर्यवहिमैः ॥ ३५ ॥
रक्ते त्वतिष्ठति क्षिप्रं स्तम्भनीमाचरेत् क्रियाम् ।
लोध्रप्रियङ्गुपत्तङ्गमाषयष्ट्याह्वगैरिकैः ॥ ३६ ॥
मृत्कपालाञ्जनक्षौमभस्मक्षीरित्वगङ्कुरैः ।
विचूर्णयेद्व्रणमुखं पद्मकादि हिमं पिबेत् । ॥ ३७ ॥
तामेव वा सिरां विध्येद्व्यधात्तस्मादनन्तरम् ।
सिरामुखं वा त्वरितं दहेत्तप्तशलाकया ॥ ३८ ॥
ततो जाङ्गलपानं नात्युष्णं नातिशीतलम् ।
दीपनीयं च वह्निर्हि परं रक्ष्यः स्रुतासृजः ॥ ३९ ॥
जलौकसस्तु सुखिनं रक्तस्रावाय योजयेत् ।
शुद्धाम्बुजातास्तन्वङ्ग्यो वृत्ता नीलोर्ध्वराजयः ॥ ४० ॥



निर्विषाः शैवलश्यावाः किञ्चित्पीतोदराश्च याः ।
अन्यथा सविषास्ताभ्यस्ताभिः कण्डूभ्रमादयः ॥ ४१ ॥
अथैतरा निशाकल्कसंयुक्तेऽम्भसि संप्लुताः ।
अवन्तिसोमे तक्रे वा पुनश्चाश्वासिता जले ॥ ४२ ॥
लगयेद्घृतमृत्स्तन्यरक्तशस्त्रनिपातनैः ।
पिबन्तीरुन्नतस्कन्धाः छादयेदार्द्रवाससा ॥ ४३ ॥
संप्राप्ताद्दुष्टशुद्धास्राज्जलूका दुष्टशोणितम् ।
आदत्ते प्रथमं हंसः क्षीरं क्षीरोदकादिव ॥ ४४ ॥
दंशस्य तोदे कण्डूवां वा मोक्षयेल्लवणादिभिः ।
अन्यथा सा स्वयं मुञ्चेत्त्वाल्पयन्नथ शोणितम् ॥ ४५ ॥
अशुद्धं स्रावयेद्दंशाद्धरिद्रागुडमाक्षिकैः ।
शतधौताज्यपिचवस्ते लेपाश्च शीतलाः ॥ ४६ ॥
दुष्टरक्तापगमनात् सद्यो रागरुजां शमः ।
गात्रं बध्वोपरि दृढं रज्ज्वा पट्टेन वाससा ॥ ४७ ॥
स्नायुसन्ध्यस्थिमर्माणि त्यजन् प्रच्छानमाचरेत् ।
अधोदेशप्रविसृतैः पदैरुपरिगामिभिः । ॥ ४८ ॥
न गाढघनतिर्यग्भिर्न पदे पदमाचरेत् ।
प्रच्छानं पिण्डिते रक्ते त्वगगाढे जलौकसः ॥ ४९ ॥
त्वक्स्थेऽलाबुघटीशृङ्गं व्यापके तु सिराव्यधः ।
वातादिधाम वा शृङ्गजलौकालाबुभिः क्रमात् ॥ ५० ॥
स्रुतास्रजः प्रदेहाद्यैः शीतैः स्याद्वायुकोपतः ।
सतोदकण्डुर्यः शोफः सर्पिषोष्णेन सेचयेत् ॥ ५१ ॥

इति हृदयप्रिये रक्तमोक्षकल्पो नाम
त्रयोदशोऽध्यायः ॥

---

# चतुर्दशोऽध्यायः ।

## क्षाराग्निकल्पः ।

॥ अथातः क्षाराग्निकल्पं व्याख्यास्यामः ॥

सर्वशस्त्रानुशस्त्राणां क्षारः श्रेष्ठो बहूनि यत् ।
छेद्यभेद्यादिकर्माणि कुरुते विषमेष्वपि ॥ १ ॥
चूषयन्निव संरूढं रोगमुन्मूलयेच्चवान् ।
कर्म कृत्वा गतरुजः स्वयमेवोपशाम्यति ॥ २ ॥
स पेयोऽर्शोऽग्निसादाश्मगुल्मोदरगरादिषु ।
लेप्यो व्यङ्गमशश्वित्रबाह्यार्शःकुष्ठसुप्तिषु ॥ ३ ॥
भगन्दरापचीग्रन्थिदुष्टनाडीव्रणादिषु ।
न तूभयोऽपि योक्तव्यः पित्तरक्ते चले बले ॥ ४ ॥
ज्वरेऽतिसारे हृन्मूर्धरोगे पाण्ड्वामयेऽरुचौ ।
तिमिरे कृतसंशुद्धौ श्वयथौ सर्वगात्रगे ॥ ५ ॥
भीरुगर्भिण्यृतुमतीप्रोद्वृत्तफलयोनिषु ।
अजीर्णेऽन्ने शिशौ वृद्धे धमनीमर्मसन्धिषु ॥ ६ ॥
तरुणास्थिसिरास्नायुसीवनीगळनाभिषु ।
देशेऽल्पमांसे वृषणे मेढ्रे स्रोतोनखान्तरे ॥ ७ ॥
वर्त्मरोगादृतेऽक्ष्णोश्च शीतवर्षोष्णदुर्दिने ।
काळमुष्ककशम्याककदळीपारिभद्रकान् ॥ ८ ॥



अश्वकर्णमहावृक्षपलाशास्फोतवृक्षकान् ।
इन्द्रवृक्षार्कपूतीकनक्तमालाश्वमारकान् ॥ ९ ॥
काकजङ्घामपामार्गमग्निमन्थाग्नितिल्वकान् ।
सार्द्रान् समूलशाखादीन् खण्डशः परिकल्पितान् ॥ १० ॥
कोशातकीश्चतस्रश्च शूकं नाळं यवस्य च ।
निवाते निचयीकृत्य पृथक्तानि शिलातले ॥ ११ ॥
प्रक्षिप्य मुष्ककचये सुधाश्मानि च दीपयेत् ।
ततस्तिलानां कुतळैर्दग्ध्वाग्नौ विगते पृथक् ॥ १२ ॥
कृत्वा सुधाश्मनां भस्म द्रोणं त्वितरभस्मनः ।
मुष्ककोत्तरमादाय प्रत्येकं जलमूत्रयोः ॥ १३ ॥
गाळयेदर्धभारेण महता वाससा ततः ।
यावत्तं पिच्छिलरक्ताच्छस्तीक्ष्णो जातस्तदा च तम् ॥ १४ ॥
गृहीत्वा क्षारनिष्यन्दं पचेल्लौह्यां विघट्टयन् ।
पच्यमाने ततस्तास्मिंस्ताः सुधाभस्मशर्कराः ॥ १५ ॥
शुक्तिं क्षीरवकं शङ्खनाभिं चायसभाजने ।
कृत्वाग्निवर्णं बहुशः क्षाराच्छे कुडवोन्मिते ॥ १६ ॥
निर्वाप्य पिष्ट्वा तेनैव प्रतीवापं विनिक्षिपेत् ।
श्लक्ष्णं शकृद्दशिखिगृध्रकङ्ककपोतजन् ॥ १७ ॥
चतुष्पात्पक्षिपित्तालमनोह्वालवणानि च ।
परितः सुतराश्चातो दर्व्या तदवघट्टयेत् ॥ १८ ॥
सबाष्पैश्च यदोत्तिष्ठेद्बुद्बुदैर्लेहवत् घनः ।
अवतार्य तदाशीतो यवराशावयोमये ॥ १९ ॥
स्थाप्योयम्मध्यमक्षारो न तु पिष्ट्वा क्षिपेन्मृदौ ।
निर्वाप्यावनयेत् तीक्ष्णे पूर्ववत् प्रतिवापनम् ॥ २० ॥

तथा लाङ्गलिकादन्तीचित्रकातिविषावचाः ।
स्वर्चिकाकनकक्षीरीहिङ्गुपूतीकपल्लवाः ॥ २१ ॥
तालपत्री बिडं चेति सप्तरात्रात् परं तु सः ।
योज्यस्तीक्ष्णोऽनिलश्लेष्ममेदोजेष्वर्बुदादिषु ॥ २२ ॥
मध्येष्वेष्वेव मध्योऽन्यः पित्तास्रगुदजन्मसु ।
बलार्थं क्षीणपानीये क्षाराम्बु पुनरावपेत् ॥ २३ ॥
नातितीक्ष्णमृदुः श्लक्ष्णः पिच्छिलः शीघ्रगः सितः ।
शिखरी सुखनिर्वाप्यो न विष्यन्दी न चातिरुक् ॥ २४ ॥
रोगानुरूपं क्षारं तु दद्याद्वैद्यः शलाकया ।
ततताभवगाढत्वं व्याधेरालोच्य कल्पयेत् ॥ २५ ॥
लेपे तनुत्वं घनतां तततां चामयस्य तु ।
स्थानान्यूनम्मृदुं दद्यादर्धभागे तु मध्यमम् ॥ २६ ॥
तीक्ष्णं मध्यत्रिभागे च तालपत्रघनो घने ।
घ्राणार्बुदादौ सुतनुर्मात्रा धार्या शतं दलम् ॥ २७ ॥
क्षारं प्रमार्जनेनानु परिमृज्याऽवगम्य च ।
सुदग्धं घृतमध्वक्तं तत् पयोमस्तुकाञ्जिकैः ॥ २८ ॥
निर्वापयेत्ततः साज्यैः स्वादुशीतैः प्रदेहयेत् ।
अभिष्यन्दीनि योज्यानि भोज्यानि क्लेदनाय च ॥ २९ ॥
यदि च स्थिरमूलत्वान् क्षारदग्धं न शीर्यते ।
धान्याम्लबीजयष्ट्याह्वतिलैरालेपयेत्ततः ॥ ३० ॥
तिलकल्कः समधुको घृताक्तो व्रणरोपणः ।
पक्वजम्ब्वासितं सन्नं सम्यग्दग्धे विपर्यये ॥ ३१ ॥
ताम्रतातोदकण्ड्वाढ्यं दुर्दग्धं तत् पुनर्दहेत् ।
अतिदग्धे स्रवेद्रक्तं मूर्छादाहज्वरादयः ॥ ३२ ॥



गुदे विशेषाद्विण्मूत्रसंरोधोऽतिप्रवर्तनम् ।
पुंस्त्वोपघातो मृत्युर्वा गुदस्य शतनाद् ध्रुवम् ॥ ३३ ॥
नासायां नासिकावंशदरणाकुञ्चनोद्भवः ।
भवेच्च विषयाज्ञानं तद्वच्छ्रोत्रादिकेष्वपि ॥ ३४ ॥
विशेषादत्र सेकोऽम्लैर्लेपो मधुघृतं तिलाः ।
वातपित्तहरा चेष्टा सर्वैव शिशिरा क्रिया ॥ ३५ ॥
अम्लो हि शीतः स्पर्शेन क्षारस्तेनोपसंहितः ।
यात्याशु स्वादुतां तस्मादम्लैर्निर्वापयेत्तराम् ॥ ३६ ॥
अग्निः क्षारादपि श्रेष्ठस्तद्दग्धानामसंभवात् ।
भेषजक्षारशस्त्रैश्च न सिद्धानां प्रसाधनात् ॥ ३७ ॥
त्वचि मांससिरास्नायुसन्ध्यस्थिषु स योज्यते ।
मशाङ्गग्लानिमूर्धार्तिचर्मकीलतिलादिषु ॥ ३८ ॥
त्वग्दाहो वर्तिगोदन्तसूर्यकान्तशरादिभिः ।
अर्शोभगन्दरग्रन्थिदुष्टनाडीव्रणादिषु ॥ ३९ ॥
मांसदाहो मधुस्नेहजाम्बवोष्ठगुडादिभिः ।
श्लिष्टवर्त्मन्यसृक्स्रावनील्यसम्यग्व्यधादिषु ॥ ४० ॥
सिरादिदाहस्तैरेव न दहेत् क्षारवारितान् ।
अन्तश्शल्यासृजो भिन्नकोष्ठान् भूरिव्रणातुरान् ॥ ४१ ॥
सुदग्धं घृतमध्वक्तं स्निग्धशीतैः प्रदेहयेत् ।
तस्य लिङ्गं स्थिते रक्ते शब्दवल्लसिकान्वितम् ॥ ४२ ॥
पक्वतालकपोताभं सुरोहं नातिवेदनम् ।
प्रमाददग्धवत् सर्वं दुर्दग्धात्यर्थदग्धयोः ॥ ४३ ॥
चतुर्धा तत्र तुत्थेन सह तुत्थस्य लक्षणम् ।
त्वग्विवर्णोष्यतेऽत्यर्थं न च स्फोटसमुद्भवः ॥ ४४ ॥

सस्फोटदाहतीव्रोषं दुर्दग्धमतिदाहतः ।
मांसलम्बनसंकोचदाहधूपनवेदनाः ॥ ४५ ॥
सिरादिनाशस्तृण्मूर्छाव्रणगाम्भीर्यमृत्यवः ।
तुत्थस्याग्निप्रतपनं कार्यमुष्णं च भेषजम् ॥ ४६ ॥
स्त्यानेऽस्रे वेदनात्यर्थं विलीने मन्दता रुजः ।
दुर्दग्धे शीतमुष्णं च युञ्ज्यादादौ ततो हिमम् ॥ ४७ ॥
सम्यग्दग्धे तुकाक्षीरिप्लक्षगैरिकचन्दनैः ।
लिम्पेत्साज्यामृतैरूर्ध्वं पित्तविद्रधिवत्क्रिया ॥ ४८ ॥
अतिदग्धे द्रुतं कुर्यात्सर्वं पित्तविसर्पवत् ।
स्नेहदग्धे भृशतरं रूक्षं तत्र तु योजयेत् ॥ ४९ ॥

वाक्यान्तरैर्बहुविधैरपि कर्मभिर्ये
साध्या भवन्ति न गुदाङ्कुरदुर्व्रणाद्याः ।
रोगास्तु ते द्रुततरं द्रुतमूलबन्धाः
क्षाराग्निकर्मभिदयैव भवन्ति साध्याः ॥ ५० ॥

दोषं दूष्यं बलं कालं देशाग्निप्रकृतीर्वयः ।
सत्त्वं सात्म्यमवस्थाश्च वीक्ष्य कुर्याच्चिकित्सितम् ॥ ५१ ॥
स्नेहं स्वेदं वमिं रेकं वस्तिं काथादिकांश्च वा ।
नस्यादिकमसृङ्मोक्षं क्षारं चाग्निं सुखप्रदम् ॥ ५२ ॥

इति हृदयप्रिये क्षाराग्निकल्पो नाम
चतुर्दशोऽध्यायः ॥

---

# पञ्चदशोऽध्यायः ।

## यन्त्रशस्त्रादिकल्पः ।

॥ अथातो यन्त्रशस्त्रादिकल्पं व्याख्यास्यामः ॥

वस्तिक्षाराग्निकर्मादौ स्याद्यन्त्रं क्षिप्रसाधनम् ।
अनेकरूपकार्यत्वाद्यन्त्राणि विविधानि च ॥ १ ॥
वस्तिनेत्रं तु हेमादिधातुदार्वस्थिवेणुजम् ।
गोपुच्छाकारमच्छिद्रं श्लक्ष्णर्जुगुलिकामुखम् ॥ २ ॥
ऊनेऽब्दे पञ्चपूर्णेऽस्मिन्नासप्तभ्योऽङ्गुलानि षट् ।
सप्तमे सप्त तान्यष्टौ द्वादशे षोडशे नव ॥ ३ ॥
द्वादशैव परं विंशाद्वीक्ष्य वर्षान्तरेषु च ।
वयोबलशरीराणि प्रमाणमभिवर्धयेत् ॥ ४ ॥
स्वाङ्गुष्ठेन समं मूले स्थौल्येनाग्रे कनिष्ठया ।
पूर्णेऽब्देऽङ्गुलमादाय तदर्धार्धप्रवर्धितम् ॥ ५ ॥
त्र्यङ्गुलं परमं छिद्रं मूलेऽग्रे वहते तु यत् ।
मुद्गं माषं कलायं तत् क्लिन्नं कर्कन्धुकं क्रमात् ॥ ६ ॥
मूलच्छिद्रप्रमाणेन प्रान्ते घटितकर्णिकम् ।
वर्त्याग्रे पिहितं मूले यथास्वं द्व्यङ्गुलान्तरम् ॥ ७ ॥
कर्णिकाद्वितयं नेत्रे कुर्यात्तत्र च योजयेत् ।
अजाविमहिषादीनां वस्तिमन्याङ्गचर्म वा ॥ ८ ॥

तनुं सुदृढमच्छिद्रं सूत्रबद्धं सुखक्रियम् ।
तथैवोत्तरवस्तौ च नराणां द्वादशाङ्गुलम् ॥ ९ ॥
रोग्यङ्गुलप्रमाणेन कुन्दवृन्तोपमं दृढम् ।
सिद्धार्थकप्रवेशाग्रं मूलमध्यस्थकर्णिकम् ॥ १० ॥
मृदुबस्तिसुबद्धं च तद्वत् स्त्रीणां दशांगुलम् ।
कुर्यान्मुद्गप्रवेशाग्रं मूले तद् द्विगुणं मतम् ॥ ११ ॥
अपत्यमार्गे योन्यं स्यादन्त्राग्रं चतुरङ्गुलम् ।
द्व्यङ्गुलं मूत्रसरणौ बालानां त्वेकमङ्गुलम् ॥ १२ ॥
बस्तिनेत्रसमद्रव्यं त्रिकोणं कारयेदृजुम् ।
मूलाग्रेऽङ्गुष्ठकोलास्थिप्रवेशं धूमनेत्रकम् ॥ १३ ॥
तीक्ष्णस्नेहनमध्येषु त्रीणि चत्वारि पञ्च च ।
अङ्गुलानां क्रमात् पातुः प्रमाणेनाष्टकानि तत् ॥ १४ ॥
नस्ये तु द्विमुखा नाळी कळायास्या षडङ्गुला ।
हेमादिधातुभिः कार्या नाळी मूत्रप्रवर्तिनी ॥ १५ ॥
षोडशांगुलदीर्घा सा वक्राग्रे चतुरङ्गुला ।
मुद्गवृत्ता दलच्छिद्रा शलाकाक्रान्तमूलका ॥ १६ ॥
अग्रपार्श्वे सूक्ष्मरन्ध्रा पुंसां स्त्रीणां तु दैर्घ्यतः ।
अष्टांगुला धनुर्वक्रा स्थौल्येन द्विगुणा तथा ॥ १७ ॥
दशांगुलार्धनाहा च श्रोकच्छिद्रा तया गळे ।
पोस्थकीशुण्डिकादीनां दर्शनं कर्म चेष्यते ॥ १८ ॥
अर्शसां गोस्तनाकारं यन्त्रकं चतुरङ्गुलम् ।
नाहे पञ्चांगुलं पुंसां प्रमदानां षडङ्गुलम् ॥ १९ ॥
द्विच्छिद्रं दर्शने व्याधेरेकच्छिद्रं तु कर्मणि ।
मध्येऽस्य त्र्यङ्गुलच्छिद्रमङ्गुष्ठोदरविस्तृतम् ॥ २० ॥



अर्धाङ्गुलोच्छ्रितोद्वृत्तकर्णिकं च तदूर्ध्वतः ।
शम्याख्यं तादृगच्छिद्रं यन्त्रमर्शःप्रपीडने ॥ २१ ॥
सर्वथापनयेदोष्ठं छिद्रादूर्ध्वं भगन्दरे ।
घ्राणार्बुदार्शसामेकच्छिद्रा नाळ्यङ्गुलद्वया ॥ २२ ॥
प्रदेशिनीपरीणाहा स्यात् भगन्दरयन्त्रवत् ।
अङ्गुलीत्राणकं दान्तं वार्क्षं वा चतुरङ्गुलम् ॥ २३ ॥
द्विच्छिद्रं गोस्तनाकारं तद्वक्त्रविवृतौ सुखम् ।
योनिव्रणेक्षणं तद्वद्विमुखं षोडशांगुलम् ॥ २४ ॥
मुद्राबद्धं चतुर्भित्तमम्भोजमुकुळाननम् ।
चतुश्शलाकमक्रान्तं मूले तद्विकसेन्मुखे ॥ २५ ॥
यन्त्रे नाळीव्रणाभ्यङ्गक्षाळनाय षडङ्गुले ।
बस्तियन्त्राकृती मूले मुखेऽङ्गुष्ठकलायखे ॥ २६ ॥
अग्रतोऽकर्णिके मूले निबद्धमृदुचर्मणी ।
द्विद्वारा नळिका पिच्छनळिका वा दकोदरे ॥ २७ ॥
त्र्यङ्गुलास्यं भवेच्छृङ्गं चूषणेऽष्टादशांगुलम् ।
अग्रे सिद्धार्थकच्छिद्रं सुनद्धं चूचुकाकृति ॥ २८ ॥
स्याद्द्वादशांगुलोऽलाबुर्नाहे त्वष्टादशांगुलः ।
चतुस्त्र्यङ्गुलवृत्तास्यो दीप्तोऽन्तःश्लेष्मरक्तहृत् ॥ २९ ॥
तद्वद्घटी हिता गुल्मविलयोन्नमने च सा ।
शलाका विविधाकाराः स्युः प्रयोगसुखावहाः ॥ ३० ॥
एषणे वृत्तवदना दीर्घेणाष्टांगुला पुनः ।
स्यान्मसूरदलास्या च शोधनाय नवांगुला ॥ ३१ ॥
शङ्कवः षडुभौ तेषां षोडशद्वादशांगुलौ ।
व्यूहनेऽहिफणावक्त्रौ द्वौ द्वादशदशांगुलौ ॥ ३२ ॥

नतोऽग्रे शङ्कुना तुल्यो गर्भशङ्कुरिति स्मृतः ॥
अष्टादशांगुलस्तेन मूढगर्भं हरेत् स्त्रियाः ॥ ३३ ॥

अश्मर्याहरणे सर्पफणावद्वक्रमग्रतः ।
कर्णशोधनमश्वत्थपत्रप्रान्तं स्रुवाननम् ॥ ३४ ॥

कार्पासविहितोष्णीषाः शलाकाः स्युः प्रमार्जने ।
अञ्जनार्थं तथान्याश्च क्षाराग्न्यादौ नताननाः ॥ ३५ ॥

कोलास्थिदलतुल्यास्या नासार्शोऽर्बुददाहकृत् ।
द्विमुखी छिन्ननाशे तु ताम्री कुरवकानना ॥ ३६ ॥

सदंशो मूलबद्धः स्याद्द्विदलो विवृताननः ।
षडङ्गुलो निर्हरणे सूक्ष्मशल्योपपक्ष्मणाम् ॥ ३७ ॥

विद्यात्स्वस्तिकयन्त्राणि कङ्काद्यास्यसमानि च ।
कौटिल्यार्जवदैर्घ्यादावेषां साध्यं नियामकम् ॥ ३८ ॥

दशांगुलः प्रदंशः स्यान्नतेषद्विवृताननः ।
संवृतास्योऽपरस्ताभ्यां दन्तान् शल्यानि चाहरेत् ॥ ३९ ॥

मुचुटी सूक्ष्मदन्तर्जुर्मूले रुचकभूषणा ।
गम्भीरव्रणमांसादि च्छिन्नशिष्टार्म चैतया ॥ ४० ॥

रुचकाग्रं गर्भहृतौ द्विगुणद्वादशांगुलम् ।
दशांगुलं परं कीलान् वक्रं वृश्चिकशृङ्गवत् ॥ ४१ ॥

अनुयन्त्राण्यश्मरज्जुहस्तपादनखादि च ।
शस्त्राणि रोमवाहीनि सुग्रहाणि च कारयेत् ॥ ४२ ॥

स्वोन्मानाष्टांशकफलान्यभिधानाकृतीनि च ।
षडङ्गुलानि प्रायेण दैर्घ्यात्तीक्ष्णोद्भवानि च ॥ ४३ ॥

मण्डलाग्रं फले तेषां तर्जन्यन्तर्नखाकृति ।
लेखने छेदने योज्यं पोथकीशुण्डिकादिषु ॥ ४४ ॥



वृद्धिपत्रं क्षुराकारं छेदभेदनपाटने ।
ऋज्वग्रमुन्नते शोफे निम्ने प्रग्रनताग्रकम् ॥ ४५ ॥

उत्पलाध्यर्धधाराख्ये दीर्घहृस्वानने तथा ।
सर्पास्यं घ्राणकर्णार्शश्छेदनेऽर्धांगुलं फले ॥ ४६ ॥

फलेऽध्यर्धांगुलं योज्यं स्यात्सिरोदरयोर्व्यधे ।
व्रीहिवक्त्रं कुठार्यर्धांगुलगोदशनाननम् ॥ ४७ ॥

तयोर्ध्वदण्डया विध्येदुपर्यस्थां स्थितां सिराम् ।
मुद्रिकानिर्गतमुखं फले त्वर्धांगुलायतम् ॥ ४८ ॥

योगतो वृद्धिपत्रेण समम्ङ्गुलिशस्त्रकम् ।
तत्प्रदेशिन्यग्रपर्वप्रमाणार्पितमुद्रिकम् ॥ ४९ ॥

सूत्रबद्धं गलस्रोतोरोगोच्छेदनभेदने ।
ग्रहणे शुण्डिकार्मादेर्बडिशस्तु नताननः ॥ ५० ॥

छेदेऽस्थ्नां खरपत्रं तु सूक्ष्मदन्तं दशांगुलम् ।
तत्केषु च यथायोग्यं कुर्यात्सैसरु बन्धनम् ॥ ५१ ॥

स्नायुसूत्रकचच्छेदे कर्तरी च नवांगुला ।
वक्रर्जुधारं द्विमुखं नखशस्त्रं नवांगुलम् ॥ ५२ ॥

सूक्ष्मशल्योद्धृतिच्छेदभेदप्रच्छानलेखने ।
एकधारं चतुष्कोणं प्रवृद्धाकृति चैकतः ॥ ५३ ॥

दन्तशोधनकं तेन शोधयेद्दन्तशर्कराः ।
सूची त्रिकोणा सुच्छिद्रा मांसलाङ्गेषु सीवने ॥ ५४ ॥

धनुर्वक्रा पुनस्त्वन्या पक्वामाशयमर्मसु ।
ऋजुवृत्तात्मिकान्यत्र त्र्यश्रा त्र्यङ्गुलायता ॥ ५५ ॥

कूर्चो वृत्तैकपीठस्थसूच्यष्टकविनिर्मितः ।
स योज्यो नीलिकाव्यङ्गकेशशातनकुट्टने ॥ ५६ ॥

अर्शोगुल्ममुखोद्वृत्तैरष्टाभिः कण्टकैः स्मृतः ।
पाणिभ्यां मथ्यमानेन घ्राणान्तेन हरेदसृक् ॥ ५७ ॥
आरार्धाङ्गुलवृत्तास्या तत्प्रवेशा तदूर्ध्वतः ।
चतुरश्रा तया विध्येच्छोफं पक्वामसंशये ॥ ५८ ॥
सदा द्विशाणि गृह्णीयाद्यन्त्रशस्त्राणि कर्मवित् ।
अनुयन्त्राणि च नखक्षाराग्न्यादीनि चिन्तयेत् ॥ ५९ ॥
उक्तं पूर्वोक्तरीत्यैवमन्यान्यपि यथोचितम् ।
कुर्यादुपेये नियमो नोपायानामिहास्ति यत् ॥ ६० ॥
अतः परं शस्त्रकर्म पक्वे शोफे प्रवक्ष्यते ।
शोफोऽल्परुक् सवर्णश्च सामो रक्ष्यः स पाकतः ॥ ६१ ॥
सुशीतलेपसेकास्रमोक्षसंशोधनादिभिः ।
पच्यमानो विवर्णस्तु रागतोदज्वरान्वितः ॥ ६२ ॥
दाहोषाम्लूयनातृष्णानिद्राहान्यरुचिप्रदः ।
पक्वेऽल्पा वेदना कण्डूः पाण्डुता वलिसंभवः ॥ ६३ ॥
नामोऽन्तेषून्नतिर्मध्ये स्पृष्टे पूयप्रसर्पणम् ।
शूलं नर्तेऽनिलाद्दाहः पित्ताच्छोफः कफोदयात् ॥ ६४ ॥
रागो रक्ताच्च पाकः स्यादतो दोषैः सशोणितैः ।
अतिपक्वे रोमभङ्गः श्यावता मृदुता त्वचि ॥ ६५ ॥
कफजेषु तु शोफेषु गम्भीरं पाकमेत्यसृक् ।
पक्वलिङ्गं ततोऽस्पष्टं यत्र स्याच्छीतशोफता ॥ ६६ ॥
त्वक्सावर्ण्यं रुजोऽल्पत्वं घनस्पर्शत्वमश्मवत् ।
रक्तपाकमिति ब्रूयात्तं प्राज्ञो मुक्तसंशयः ॥ ६७ ॥
बलिनः पाटयेदाशु मर्मसन्ध्यादि वर्जयन् ।
आमच्छेदे सिराव्यापदसृक्स्राववेदनाः ॥ ६८ ॥



अतिपक्वो दहेच्छोफः सिरास्नाय्वसृगामिषम् ।
तस्मादामं न हि छिन्द्यात् पक्वं नैव त्यजेद् बुधः ॥ ६९ ॥
प्राक् शस्त्रकर्मणश्चेष्टं भोजयेदन्नमातुरम् ।
मद्यपं पाययेन्मद्यं तीक्ष्णमज्ञापकं रुजाम् ॥ ७० ॥
अन्यत्र मूढगर्भाश्ममुखरोगोदरातुरात् ।
अथाहृतोपकरणं वैद्यः प्राङ्मुखमातुरम् ॥ ७१ ॥
संमुखो यन्त्रयित्वा तु न्यस्तमर्माणि वर्जयन् ।
अनुलोमं सुनिशितं शस्त्रमापूयदर्शनात् ॥ ७२ ॥
सकृदेवाहरेत्तच्च पाके तु सुमहत्यपि ।
पाटने द्व्यङ्गुलं सम्यग्द्व्यङ्गुलत्र्यङ्गुलान्तरम् ॥ ७३ ॥
एषित्वा सम्यगेषिण्या परितः सुनिरूपितम् ।
अङ्गुलीवालनालैर्वा यथादेशं यथाशयम् ॥ ७४ ॥
यतोगतां गतिं विद्यादुत्सङ्गो यत्र यत्र च ।
तत्र तत्र व्रणं कुर्यात्सुविभक्तं निराशयम् ॥ ॥ ७५ ॥
आयतं च विशालं च यथा दोषो न तिष्ठति ।
शौर्यमाशुक्रिया तीक्ष्णं शस्त्रमस्वेदवेपथू ॥ ॥ ७६ ॥
असंमोहश्च वैद्यस्य शस्त्रकर्मणि शस्यते ।
तिर्यक् छिन्द्याल्ललाटभ्रूदन्तवेष्टकजत्रुणि ॥ ७७ ॥
कुक्षिकक्षाक्षिकूटोष्ठकपोलगलवङ्क्षणे ।
अन्यत्र च्छेदनात्तिर्यक्सिरास्नायुविपाटनम् ॥ ७८ ॥
शस्त्रेऽवचारिते वाग्भिः शीताम्भोभिश्च रोगिणम् ।
आश्वास्य परितोऽङ्गुल्या प्रतिपीड्य व्रणं ततः ॥ ७९ ॥
क्षालयित्वा कषायेण प्लोतेनाम्भोऽपनीय च ।
गुग्गुल्वगरुसिद्धार्थहिंगुसर्जरसान्वितैः ॥ ८० ॥

धूपयेत् पट्टषड्ग्रन्थानिम्बपत्रैर्घृताप्लुतैः ।
तिलकल्काज्यमधुभिर्यथास्वं भेषजेन च ॥ ८१ ॥

दिग्धां वर्तिं ततो दद्यात्तैरेवाच्छादयेच्च ताम् ।
घृताक्तैः सक्तुभिश्चोर्ध्वं घनां कवलिकां ततः ॥ ८२ ॥

निधाय युक्त्या बध्नीयात् पट्टेन सुसमाहितः ।
प्रक्षालनादि दिवसे द्वितीये कर्म नाचरेत् ॥ ८३ ॥

तृतीयेऽह्नि पुनः कुर्याद् व्रणे कर्म च पूर्ववत् ।
सपूतिमांसे सोत्सङ्गे सगतौ पूयपूरिते ॥ ८४ ॥

व्रणे विकेशिकान्तस्था शोधयेच्छीघ्रशोधिनी ।
ततः स्नेहविधानोक्तं तस्याचारं समादिशेत् ॥ ८५ ॥

क्षीरेक्षुविकृतीरम्लपटुकट्वासवं त्यजेत् ।
स्त्रीदर्शनादिना शुक्रं चलितं सङ्गदोषदम् ॥ ८६ ॥

व्रणे श्वयथुरायासात् स च रागश्च जागरात् ।
तौ च रुक् च दिवास्वापात् ते च मृत्युश्च मैथुनात् ॥ ८७ ॥

यवषाष्टिकगोधूमतुवरीचणमुद्गकम् ।
बालमूलकवार्ताकजीवन्तीसुनिषण्डकम् ॥ ८८ ॥

कारवेल्लककर्कोटपटोलकटुकाफलम् ।
सैन्धवं डाडिमं धात्री घृतं तप्तहिमं जलम् ॥ ८९ ॥

अशीतं जीर्णशाल्यन्नं विहितं पथ्यभोजने ।
सद्यः सद्योव्रणान् सीव्येद्विवृतानभिघातजान् ॥ ९० ॥

प्रलम्बिमांसं विच्छिन्नं चलास्थ्यादि निवेश्य च ।
स्थिते रक्ते गुणैः सुष्ठु रोमादीन्यपनीय च ॥ ९१ ॥

सान्त्वयित्वातुरं दिग्धे व्रणे मधुघृतद्रुतैः ।
अञ्जनक्षौमजमषीफलिनीलोध्रयष्टिभिः ॥ ९२ ॥



व्रणं निश्शोणितोष्ठं तु लिखित्वा जातशोणितम् ।
सीव्येद्रक्तं हि सन्धानं विद्धि बन्धादि पूर्ववत् ॥ ९४ ॥

यथाङ्गं सुनिविष्टं स्यात्तथा बन्धं प्रकल्पयेत् ।
बध्नीयाद्गाढमूरुस्फिक्कक्ष्यावङ्क्षणमूर्धसु ॥ ९५ ॥

मुखोरःपार्श्वजठरमेढ्रमुष्कादिके समम् ।
श्लथं नेत्रे सन्धिषु च न दृढं कफवातजे ॥ ९६ ॥

बन्धः शीते वसन्ते च मोक्षणीयस्त्र्यहात्त्र्यहात् ।
सायंप्रातस्ततो मोक्षो ग्रीष्मे शरदि चेष्यते ॥ ९७ ॥

व्रणक्रियां समालोच्य चिकित्सेच्च यथायथम् ।

इति हृदयप्रिये यन्त्रशस्त्रादिकल्पो नाम
पञ्चदशोऽध्यायः ॥

---

# षोडशोऽध्यायः ।

---

## द्रवपरिमाणकल्पः ।

---

॥ अथातो द्रवपरिमाणकल्पं व्याख्यास्यामः ॥

इतः परं चौषधस्य कल्पनात्र निगद्यते ।
धन्वसाधारणे देशे कुशादिसहिते शुचौ ॥ १ ॥

प्रदक्षिणजले चान्यविरुद्धद्रुमवर्जिते ।
त्यक्ते श्मशानवल्मीकश्वभ्राद्यैः शुभमृत्तिके ॥ २ ॥

संजातमौषधं ग्राह्यं युक्तं वर्णरसादिभिः ।
मूलं जन्तुभवाद्युक्ततुर्दिशां दिशमाश्रितम् ॥ ३ ॥
अथ कल्याणचरितः श्राद्धः शुचिरुपोषितः ।
गृह्णीयादौषधं सुखं स्थितं काले तु कल्पयेत् ॥ ॥ ४ ॥
सक्षीरं तदसंपत्तावनतिक्रान्तवत्सरम् ।
ऋते गुडघृतक्षौद्रधान्यकृष्णाविडङ्गतः ॥ ५ ॥
पयो वाष्कयणं ग्राह्यं विण्मूत्रादि च नीरुजाम् ।
स्वरसः कल्कितः क्वाथः शीतो रात्रिंदिवस्थितः ॥ ६ ॥
सद्योऽभिषुतपूतत्वात् फाण्टश्चेत्यत्र पञ्चधा ।
कषायस्त्वपटुद्रव्यैः पूर्वं पूर्वं बलाधिकाः ॥ ७ ॥
मात्राया न व्यवस्थास्ति व्याधिं कोष्ठं बलं वयः ।
आलोच्य देशकालौ च युञ्ज्यात्तन्मानकल्पने ॥ ८ ॥
मध्यं तु मानं निर्दिष्टं स्वरसस्य चतुष्पलम् ।
पेयस्य कर्षमालोड्यं द्रवद्रव्यपलत्रये ॥ ९ ॥
क्वाथं द्रव्यपले कुर्यात् प्रस्थार्धं पादशेषितम् ।
शीतं पले पलैः षड्भिश्चतुर्भिश्च परं द्रवैः ॥ १० ॥
उपरिक्षेपणे दद्यात् कर्षार्धं द्रवचूर्णयोः ।
तत्पादांशं क्षारपटुगुग्गुल्वश्मोद्भवादिकम् ॥ ११ ॥
स्नेहपाके त्वमानोक्तौ क्वाथः प्रोक्तश्चतुर्गुणः ।
स्नेहे सिध्यति शुद्धाम्बुनिष्क्वाथस्वरसैः क्रमात् ॥ १२ ॥
कल्कस्य योजयेदंशं चतुर्थं षष्ठमष्टकम् ।
एकद्वित्रिदिनैः पाकः क्षीरे तक्रे रसे क्रमात् ॥ १३ ॥
क्वाथे पञ्चदिनैः प्रोक्तः काञ्चिके तक्रवत् पुनः ।
क्वाथः पञ्चदिनैर्मूले सारे स्यात्सर्वपर्दिनैः ॥ १४ ॥



प्रायेण मूलं संग्राह्यं निम्बादीनां पुनस्त्वचः ।
सारो ग्राह्योऽसनादीनां वीर्याधिक्यानुरोधतः ॥ १५ ॥
छिन्नोद्भवामहापञ्चमूलाद्या निखिलाः स्मृताः ।
पाकस्तु त्रिविधो मन्दश्चिक्कणः खरचिक्कणः ॥ १६ ॥
मन्दः कल्कसमे किट्टे चिक्कणो मदनोपमे ।
किञ्चित् सीदति कृष्णे च वर्तमाने च पश्चिमः ॥ १७ ॥
स्नेहस्य तन्तुमत्त्वाप्सु मज्जनं सरणं न च ।
वर्णादिसंपच्च यदा तदा द्रागवतारयेत् ॥ १८ ॥
मृदुर्नस्ये खरोऽभ्यङ्गे पाने बस्तौ च चिक्कणः ।
उन्मानं परिमाणं च प्रकृतत्वादिहोच्यते ॥ १९ ॥
सर्षपा द्वादश व्रीहिः ते द्वादश पणं नव ।
शाणं निष्कं द्वादश स्युः द्वे शाणे वटकं स्मृतम् ॥ २० ॥
कर्षं शाणैश्चतुर्भिः स्याच्छुक्तिः कर्षद्वयं भवेत् ।
पलं कर्षैश्चतुर्भिः स्यात् प्रसृतं तु पलद्वयम् ॥ २१ ॥
तुला पलशतं प्रोक्ता भारः स्याद्विंशतिस्तुलाः ।
वटकस्य तु पर्यायो टङ्कणः कोलमित्यपि ॥ २२ ॥
कर्षस्याख्यं पिचुः पाणितलं च कवलग्रहः ।
सुवर्णं पाणिमानं च बिडालपदकं तु के ॥ २३ ॥
शुक्तेरष्टमिका प्रोक्ता पलस्यार्धं चतुर्थिका ।
मुष्टिः प्रकुञ्चो बिल्वं च प्रसृतस्याञ्जलिस्तथा ॥ २४ ॥
षट्त्रिंशद्बिन्दुभिः शाणं स्यात्प्रस्थकुडवद्रवात् ।
द्रवे शाणं पाणितलं मुष्टिं च कुडवं क्रमात् ॥ २५ ॥
प्रस्थं तथाढकं द्रोणं वहं विद्याच्चतुर्गुणम् ।
आढकस्य तु पर्यायः कंसः पात्रं च भाजनम् ॥ २६ ॥

द्रोणस्य घटपर्याया: पर्याग्: स्युस्तथार्मण: ।
प्रसिद्धान्यत्र मानानि कथितानि स्वनामभिः ॥ २७ ॥

समाप्यते स्थानमिदं वैद्यकर्मप्रबोधकम् ।
आयुर्वेदोक्तसाराणां कल्पनात् कल्पसंज्ञितम् ॥ २८ ॥

नित्यं श्रीपरमेश्वरस्य भजता व्याघ्रालयाधीशितुः
पादाब्जं परमेश्वरेण शिवभूदेवान्वयोद्भूतिना ।
संक्षिप्ते हृदयप्रिये प्रकलितः खण्डोऽत्र कल्पाभिधो
मोदायास्तु गुणेतरौ विमृशतां मात्सर्यवर्जं सताम् ॥ २९ ॥

इति हृदयप्रिये द्रव्यादिकल्पो नाम
षोडशोऽध्यायः ।

---

# अथ सप्तदशोऽध्यायः ।

---

## दूतादिलक्षणम् ।

---

॥ अथातो दूतादिलक्षणं व्याख्यास्यामः ॥

अथातो वक्ष्यते स्थानं सनिदानं चिकित्सितम् ।
साध्यासाध्यविभागार्थमादौ दूतादिलक्षणम् ॥ १ ॥

पाषण्डाश्रमवर्णानां सवर्णाः कर्मसिद्धये ।
त एव विपरीताः स्युर्दूताः कर्मविपत्तये ॥ २ ॥

दीनं भीतमनिष्टोक्तिं रक्तमाल्यानुलेपनम् ।
दण्डिनं जटिलं मुण्डमाह्वयन्तं च दूरतः ॥ ३ ॥



शस्त्रिणं तैलपङ्काङ्कं काष्ठलोष्टादिमर्दिनम् ।
आर्द्रवस्त्रं च जानं याहूतमप्रियसूचकम् ॥ ४ ॥

अशस्तचिन्तावचने नग्ने च्छिन्दति भिन्दति ।
जुह्वाने पावकं पिण्डान् पितृभ्यो निर्वपत्यपि ॥ ५ ॥

सुप्ते मुक्तकचेऽभ्यक्ते रुदत्यप्रयतेऽथवा ।
वैद्ये दूता मनुष्याणामागच्छन्ति मुमूर्षताम् ॥ ६ ॥

तथार्धरात्रे मध्याह्ने सन्ध्ययोः पर्ववासरे ।
षष्ठीचतुर्थीनवमीराहुकेतूदयादिषु ॥ ७ ॥

भरणीकृत्तिकाश्लेषापूर्वाद्रीपित्र्यनैरृते ।
दूतस्य स्पर्शनं नाभिनासाकेशनखद्विजे ॥ ८ ॥

गुह्यपृष्ठस्तनग्रीवाजठरेऽप्यशुभप्रदम् ।
दूताभावे निर्गमे च गृहप्राप्तौ च रोगिणः ॥ ९ ॥

निमित्तमशुभं पश्यन्नचिकित्सापरो भवेत् ।
रोदनं पतनं पूर्णपात्रादेः क्रूरनिस्वनः ॥ १० ॥

चित्रवस्त्रादिसङ्गो वा पूतिगन्धोद्गमः क्षुतिः ।
पथश्छेदोऽहिमार्जारगोधानकुलवानरैः ॥ ११ ॥

उदश्विचर्मलवणं तूलतैलायसेन्धनम् ।
मार्जनीशूर्पपरशुभस्मसर्षपकर्दमाः ॥ १२ ॥

विधवाकासरखरपाशदण्डतृणानि च ।
निर्गच्छतोऽभियातानि सूचयन्ति शुभेतरम् ॥ १३ ॥

दध्यक्षतेक्षुनिष्पावप्रियङ्गुमधुसर्पिषाम् ।
यावकाञ्जनभृङ्गारघण्टादीपसरोरुहाम् ॥ १४ ॥

दूर्वार्द्रमत्स्यमांसानां जालानां फलभक्ष्ययोः ।
रत्नेभपूर्णकुम्भानां कन्यायाः स्यन्दनस्य च ॥ १५ ॥

नरस्य वर्धमानानां देवतानां नृपस्य च ।
शुक्लानां सुमनोबालचामराम्बरवाजिनाम् ॥ १६ ॥
साधुशंखध्वजोष्णीषतोरणस्वस्तिकस्य च ।
भूमेः समुद्धृतायाश्च वह्नेः प्रज्वलितस्य च ॥ १७ ॥
मनोज्ञस्यान्नपानस्य पूर्णस्य शकटस्य च ।
नृभिर्धेन्वाः सवत्साया वडवाया स्त्रिया अपि ॥ १८ ॥
वर्द्धकधेनोरिष्टस्य मुकुरादेश्च दर्शनम ।
पथि वेश्मप्रवेशे च विद्यादारोग्यलक्षणम् ॥ १९ ॥
दध्यक्षतादिकं यच्च पितृकर्मोपयौगिकम् ।
गृहप्रवेशे दृष्टं चेत् तद्भवेन्मृतिसूचकम् ॥ २० ॥
अतः परं तु विकृतिविज्ञानीयं निरूप्यते ।
पुष्पं फलस्य धूमोऽग्नेर्वर्षस्य जलदोदयः ॥ २१ ॥
यथा भविष्यतो लिङ्गं रिष्टं मृत्योस्तथा ध्रुवम् ।
अरिष्टं नास्ति मरणं दृष्टरिष्टं च जीवितम् ॥ २२ ॥
अरिष्टे रिष्टविज्ञानं न च रिष्टेऽप्यनैपुणात् ।
रूपेन्द्रियस्वरच्छायाप्रतिच्छायाक्रियादिषु ॥ २३ ॥
अन्येष्वपि च भावेषु प्राकृतेष्वनिमित्ततः ।
विकृतिर्या समासेन रिष्टं तदिति लक्षयेत् ॥ २४ ॥
केशरोम निरभ्यङ्गं यस्याभ्यक्तमिवेक्ष्यते ।
यस्यात्यर्थं चले नेत्रे स्तब्धान्तर्गतनिर्गते ॥ २५ ॥
जिह्मविस्तृतसंक्षिप्ते संक्षिप्तविनतभ्रुणी ।
नासिकात्यर्थविवृता संवृता पिटकाचिता ॥ २६ ॥
उच्छूना स्फुटिता म्लाना यस्यौष्ठं यात्यधोऽधरः ।
ऊर्ध्वं द्वितीयः स्यातां वा पक्वजम्बूनिभावुभौ ॥ २७ ॥



दन्ताः सशर्कराः श्यावास्ताम्राः पुष्पितपङ्किताः ।
सहसैव पतेयुर्वा जिह्वा जिह्वा विसर्पिणी ॥ २८ ॥
शूना शुष्कागुरुश्यावा लिप्ता स्रप्ता सकण्टका ।
शिरः शिरोधरां वोढुं पृष्ठं वा भारमात्मनः ॥ २९ ॥
हनू वा पिण्डमास्यस्थं शक्नुवन्ति न यस्य च ।
यस्यानिमित्तमङ्गानि गुरूण्यतिलघूनि वा ॥ ३० ॥
विषदोषाद्विना यस्य खेभ्यो रक्तं प्रवर्तते ।
उत्सिक्तं मेहनं यस्य वृषणावतिनिस्सृतौ ॥ ३१ ॥
अतोऽन्यथा वा यस्य स्यात्सर्वे ते कालचोदिताः ।
यस्यापूर्वाः सिरा रेखा बालेन्द्वाकृतयोऽपि वा ॥ ३२ ॥
ललाटे वस्तिशीर्षे वा षण्मासं तस्य जीवितम् ।
मूर्ध्नि भ्रुवोर्वा कुर्वन्ति सीमन्तावर्तका न वा ॥ ३३ ॥
मृत्युः स्वस्थस्य षड्रात्रात् त्रिरात्रादातुरस्य तु ।
जिह्वा श्यावा मुखं पूति सव्यमाक्षि निमज्जति ॥ ३४ ॥
खगा वा मूर्ध्नि लीयन्ते यस्य त परिवर्जयेत् ।
यस्य स्नातानुलिप्तस्य पूर्वं शुष्यत्युरो भृशम् ॥ ३५ ॥
आर्द्रेषु सर्वगात्रेषु सोऽर्धमासं न जीवति ।
अकस्माद्युगपत् गात्रे वर्णौ प्राकृतवैकृतौ ॥ ३६ ॥
तथैवोपचयग्लानिरौक्ष्यस्नेहादि मृत्यवे ।
यस्य स्फुटेयुरंगुल्यो नाकृष्टा न स जीवति ॥ ३७ ॥
क्षवकासादिषु तथा यस्यापूर्वो ध्वनिर्भवेत् ।
ह्रस्वो दीर्घो भवेच्छ्वासः पूतिः सुरभिरेव वा ॥ ३८ ॥
आप्लुतानाप्लुते काये यस्य गन्धोऽतिमानुषः ।
मलवस्त्रव्रणादौ वा वर्षान्तं तस्य जीवितम् ॥ ३९ ॥

सततोष्मसु गात्रेषु शैत्यं यस्योपलक्ष्यते ।
शीतेषु भृशमौष्ण्यं वा स्वेदः स्तम्भोऽप्यहेतुकः ॥ ४० ॥

उरस्यूष्मा भवेद्यस्य जठरे चातिशीतता ।
भिन्नं पुरीषं तृष्णा च स प्रेताधिपगोचरः ॥ ४१ ॥

मूत्रं पुरीषं निष्ठ्यूतं शुक्रं चाप्सु निमज्जति ।
निष्ठ्यूतं बहुवर्णं वा यस्य मासात्स नश्यति ॥ ४२ ॥

अरुन्धतीं व्योमगंगां यो ध्रुवं च न पश्यति ।
पश्यत्यनेत्ररोगो वा चन्द्रं विकृतरूपिणम् ॥ ४३ ॥

दीपगन्धं न जानाति षण्मासं न स जीवति ।
असतो रूपशब्दादीन् यो जानाति सतो न च ॥ ४४ ॥

गन्धस्पर्शरसादीन् वा मन्यते यो विपर्ययात् ।
जानात्यतोन्द्रियं यश्च तेषां मरणमादिशेत ॥ ४५ ॥

आतपादर्शतोयादौ प्रतिच्छाया शरीरगा ।
छिन्ना व्यङ्गा च विकृता यस्य स्यात्स च मृत्यवे ॥ ४६ ॥

वर्णप्रभाश्रया छाया रूा विपर्येति यस्य वा ।
स्वरहानिरयुक्त्या वा विवक्षुर्यश्च मुह्यति ॥ ४७ ॥

अङ्गघातं च नो वेत्ति तेषां मरणमादिशेत् ।
निकषन्निव यः पादौ च्युतांसः परिसर्पति ॥ ४८ ॥

हीयते बलतः शश्वद्योऽन्नमश्नन् हितं बहु ।
दीर्घमुच्छ्वस्य यो ह्रस्वं निश्वस्य परिताम्यति ॥ ४९ ॥

ह्रस्वं च यः प्रश्वसिति व्याविद्धं स्पन्दते भृशम् ।
शिरो विक्षिपते कृच्छ्राद्योऽञ्चयित्वा प्रपाणेकौ ॥ ५० ॥

यो ललाटोदितस्वेदः श्लथसन्धानबन्धनः ।
उत्थाप्यमानः संमुह्येद्यो बली दुर्बलोऽपि वा ॥ ५१ ॥



उत्तान एव स्वपिति यः पादौ विकरोति च
शयनासनकुड्यादौ योऽसदेव जिघृक्षति ॥ ५२ ॥

अहास्यहासी संमुह्येन् फूत्कारांश्च करोति यः ।
बलिं बलिभुजो यस्य प्रणीतं नोपभुञ्जते ॥ ५३ ॥

भिषग्भेषजपानान्नगुरुमित्रद्विषश्च ये ।
वशगाः सर्व एवैते विज्ञेयाः समवर्तिनः ॥ ५४ ॥

भक्तिः शीलं स्मृतिस्त्यागो बुद्धिर्बलमहेतुकम् ।
षडेतानि निवर्तन्ते षड्भिर्मासैर्मरिष्यतः ॥ ५५ ॥

नश्यत्यजानन् षडहात् केशोल्लुञ्छनवेदनाम् ।
अत्याहारोऽप्यनाहारो निर्निद्रो वातिनिद्रकः ॥ ५६ ॥

विकाराणां निवृत्तिर्वा सहसा संभवोऽपि वा ।
प्रेष्याः प्रतीपा यस्य स्युर्विनश्यन्ति च ते जवात् ॥ ५७ ॥

ज्वरो निहन्ति बलवान् क्षीणं शूनं हतानलम् ।
श्वासिनं सक्तवचनं रक्ताक्षं हृदि शूलिनम् ॥ ५८ ॥

रक्तपित्तं भृशं रक्तं कृष्णमिन्द्रधनुष्प्रभम् ।
रोमकूपोद्गतं पूति भूयतीसारशोफवत् ॥ ५९ ॥

यक्ष्मा पार्श्वरुजानाहरक्तच्छर्द्यंसतापिनम् ।
छर्दिर्विट्पूयरक्ताढ्या महावेगा सचन्द्रका ॥ ६० ॥

तृष्णान्यरोगग्लपितं बहिर्जिह्वं विचेतनम् ।
मदात्ययोऽतिशोतार्तं क्षीणं तैलनिभाननम् ॥ ६१ ॥

अर्शांसि पाणिपान्नाभिगुदमुष्कास्यशोफिनम् ।
हृत्पार्श्वासरुजाछर्दिपायुपाकज्वरातुरम् ॥ ६२ ॥

अतीसारो यकृत्पिण्डमांसधावनमेचकैः ।
तैलमज्जावसारक्तैर्युक्तोऽनेकविधोऽन्नवान् ॥ ६३ ॥

पार्श्वास्थिशूलिनं क्षीणं सज्वरानाहतृड्वमिम् ।
अश्मरी शूनवृषणं बद्धमूत्रं रुजार्दितम् ॥ ६४ ॥

मेहस्तृड्दाहपिटकामांसकोथातिसारिणम् ।
पिटका मर्महृत्पृष्ठस्तनांसगुदमूर्धगा ॥ ६५ ॥

पर्वपादकरस्था वा मन्दोत्साहं प्रमेहिनम् ।
गुल्मः सिरावृतश्छर्दिहिध्माध्मानरुजाज्वरैः ॥ ६६ ॥

कासपीनसहृल्लासश्वासातीसारशोफवान् ।
विण्मूत्रसंग्रहश्वासशोफाहिध्माभ्रमज्वरैः ॥ ६७ ॥

मूर्छाछर्द्यतिसारैश्च जठरं हन्ति दुर्बलम् ।
शूनाक्षं कुटिलोपस्थं रेकेऽप्यानाहिनं मुहुः ॥ ६८ ॥

पाण्डुरोगः श्वयथुमान् पीताक्षिनखदर्शनः ।
तन्द्रादाहारुचिच्छर्दिमूर्छाध्मानातिसारवान् ॥ ६९ ॥

अनेकोपद्रवयुतः पादाभ्यां प्रसृतो नरम् ।
नार्रीं शोफो मुखाद्धन्ति कुक्षिगुह्यादुभावपि ॥ ७० ॥

ज्वरातिसारौ शोफान्ते श्वयथुर्वा तयोः क्षये ।
दुर्बलस्य विशेषेण जायन्तेऽन्ताय देहिनः ॥ ७१ ॥

विसर्पः कासवैवर्ण्यज्वरमूर्छाङ्गभङ्गवान् ।
भ्रमास्यशोषहृल्लासदेहदाहातिसारवान् ॥ ७२ ॥

कुष्ठं विशीर्यमाणाङ्गं रक्तनेत्रं हतस्वरम् ।
मन्दाग्निं जन्तुभिर्जुष्टं हन्ति तृष्णातिसारिणम् ॥ ७३ ॥

वाताष्ठीलातिसंवृद्धा सतृष्णा हन्ति हृद्गता ।
वातव्याधौ तु नासाया जिह्मता वङ्क्षणेऽतिरुक् ॥ ७४ ॥

तथा वस्तिशिरोनाभिहृदये क्षीणदेहता ।
तृष्णा भिन्नपुरीषत्वं स्तिमितत्वाततताक्षते ॥ ७५ ॥



ज्वरश्च सन्धिविश्लेषो मुमूर्षोरुपजायते ।
मसूरिका प्रवाळाभा जाता नश्यन्ति वा चिरात् ॥ ७६ ॥

अन्तर्वक्रा मसूराभा किणाभा च मृतिप्रदा ।
रुजाविहीनं वातोत्थं पित्तजं दाहवर्जितम् ॥ ७७ ॥

कफाद्व्रणं पूयहीनं घ्नन्ति मर्माणि चारुजम् ।
विण्मूत्रमारुतवहाः क्रिमिणाश्च भगन्दराः ॥ ७८ ॥

घ्नन्ति सर्वामयाः क्षीणस्वरधातुबलानलम् ।
श्वयथुर्यस्य पादस्थः परिस्रस्ते च पिण्डिके ॥ ७९ ॥

सीदतः सक्थिनी चैव तं भिषक् परिवर्जयेत् ।
आननं हस्तपादं च विशेषाद्यस्य शुष्यति ॥ ८० ॥

शूयते वा विना देहात्स मासाद्याति पञ्चताम् ।
बलमांसक्षयस्तीव्रो रोगवृद्धिररोचकः ॥ ८१ ॥

यस्यातुरस्य जायन्ते त्रीन् पक्षान्न स जीवति ।
यमुद्दिश्यौषधेऽन्ने वा कल्प्यमाने विपर्ययः ॥ ८२ ॥

यस्य वा बहुशः सिद्धमौषधं च न सिध्यति ।
याम्यैरिह गृहीतत्वात् तस्य नास्ति चिकित्सितम् ॥ ८३ ॥

कथयेन्न च पृष्टोऽपि दुःश्रवं मरणं भिषक् ।
गतासुबन्धुमित्राणां न चेच्छेत्तं चिकित्सितुम् ॥ ८४ ॥

मरणं प्राणिनां दृष्टमायुःपुण्योभयक्षयात् ।
तयोरप्यक्षयाद् दृष्टं विषमापरिहारिणाम् ॥ ८५ ॥

इति हृदयप्रिये दूतादिलक्षणं नाम
सप्तदशोऽध्यायः ॥

---

# अष्टादशोऽध्यायः ।

## ज्वरनिदानम् ।

॥ अथातो ज्वरनिदानं व्याख्यास्यामः ॥

निदानं पूर्वरूपाणि रूपाण्युपशयस्तथा ।
संप्राप्तिश्चेति विज्ञानं रोगाणां पञ्चधा स्मृतम् ॥ १ ॥

सर्वेषामेव रोगाणां निदानं कुपिता मलाः ।
तत्प्रकोपस्य तु प्रोक्तं विविधाहितसेवनम् ॥ २ ॥

अहिता हीनमिथ्यातियोगाः पूर्वमुदीरिताः ।
ज्वरोऽष्टधा पृथग्दोषैः संसर्गात्सन्निपाततः ॥ ३ ॥

आगन्तुश्च मलास्तत्र स्वैः स्वैर्दुष्टाः प्रदूषणैः ।
आमाशयं प्रविश्याममनुगम्य पिधाय च ॥ ४ ॥

स्रोतांसि पक्तिस्थानाच्च निरस्य ज्वलनं बहिः ।
सह तेनाभिसर्पन्तस्तपन्तः सकलं वपुः ॥ ५ ॥

कुर्वन्तो गात्रमत्युष्णं ज्वरं निर्वर्तयन्ति ते ।
स्रोतोविबन्धात् प्रायेण तत्र स्वेदो न जायते ॥ ६ ॥



तस्य प्राग्रूपमालस्यमरतिर्गात्रगौरवम् ।
आस्यवैरस्यमरुचिर्जृम्भा साश्राकुलाक्षता ॥ ७ ॥

तत्र वातान्मूर्धहृत्पृष्ठपार्श्वास्थिसन्धिगाः ।
रुजाः स्युर्मुखवैरस्यं स्वनः कर्णे मलग्रहः ॥ ८ ॥

रूक्षारुणत्वगास्याक्षिनखमूत्रपुरीषता ।
आगमापगमक्षोभमृदुता वेदनोष्मणाम् ॥ ९ ॥

अनवस्था पादसुप्तिर्जृम्भोऽस्वप्नश्च जायते ।
युगपच्चातिरिक्तानां प्रलापः कटुकास्यता ॥ १० ॥

नासास्यपाकः शीतेच्छा भ्रमो मूर्छा मदोऽरतिः ।
विड्भेदः पित्तवमनं रक्तष्ठीवनमम्लकः ॥ ११ ॥

रक्तकोठोद्गमः पीतहरितत्वं त्वगादिषु ।
स्वेदो निश्वासवैगन्ध्यमतितृष्णा च पित्तजे ॥ १२ ॥

विशेषादरुचिर्जाड्यं स्रोतोरोधोऽल्पवेगता ।
प्रसेको मुखमाधुर्यं हृल्लेपश्वासपीनसाः ॥ १३ ॥

हृल्लासच्छर्दनं कासः स्तम्भः शैत्यं त्वगादिषु ।
अङ्गेषु शीतपिडकास्तन्द्रोदर्दः कफोद्भवे ॥ १४ ॥

काले यथास्वं सर्वेषां प्रवृत्तिर्वृद्धिरेव वा ।
यथास्वलिङ्गसंसर्गे ज्वरः संसर्गजोऽपि च ॥ १५ ॥

शिरोऽर्तिमूर्छावमिदाहमोह-
कण्ठास्यशोषारतिपर्वभेदाः ।
उन्निद्रतातृड्भ्रमरोमहर्षा
जृम्भातिवाक्त्वं च चलात् सपित्तात् ॥ १६ ॥

तापहान्यरुचिपर्वशिरोरुक्-
पीनसश्वसनकासविबन्धाः ।
शीतजाड्यतिमिरभ्रमतन्द्राः
श्लेष्मवातजनितज्वरलिङ्गम् ॥ १७ ॥

शीतस्तम्भस्वेददाहाव्यवस्था-
स्तृष्णा कासः श्लेष्मपित्तप्रवृत्तिः ।
मोहस्तन्द्रा लिप्ततिक्तास्यता च
ज्ञेयं रूपं श्लेष्मपित्तज्वरस्य ॥ १८ ॥

सर्वजो लक्षणैः सर्वैर्दाहोऽत्र च मुहुर्मुहुः ।
तद्वच्छीतं महानिद्रा दिवा जागरणं निशि ॥ १९ ॥
सदा वा नैव वा निद्रा महास्वेदोऽति नैव वा ।
गीतनर्तनहास्यादिविकृतेहाप्रवर्तनम् ॥ २० ॥
तत्रापि तारतम्येन भेदाः प्रोक्तास्त्रयोदश ।
सन्धिकस्तान्द्रिकश्चैव रुग्दाहश्चित्तविभ्रमः ॥ २१ ॥
कण्ठकुब्जः कर्णिकश्च जिह्वकोऽन्तक एव च ।
भुग्ननेत्रश्च रक्ताक्षी शीताङ्गो विप्रलापकः ॥ २२ ॥
पृथक् पृथक् तेषु चत्वारोऽप्यभिन्यासस्तु साम्यतः ।
शोफो देहविवर्णत्वं श्वासोष्णस्वेददीनताः ॥ २३ ॥
क्षणाद्बलक्षयो वातज्वरचिह्नं च सन्धिके ।
जृम्भा मुखे शकृद्गन्धो हरिजिह्वा सकण्टका ॥ २४ ॥
हिध्मा श्वासोऽतिसारश्च बाधिर्यमरतिर्वमिः ।
पिपासा कर्णकण्डूतिर्ज्वरवेगश्च तान्द्रिके ॥ २५ ॥
रुग्दाहे कण्ठवक्रत्वं नेत्रादिसदनं भ्रमः ।



रुग्दाहातिप्रवृत्तिश्च यत्रसाध्यश्च स स्मृतः ॥ २६ ॥
वैकल्यं मुखवक्रत्वं गीतं हास्यं महोष्णता ।
कम्पो रुजा प्रलापश्च घोरेऽस्मिंश्चित्तविभ्रमे ॥ २७ ॥
प्रकम्पः कण्ठकुब्जत्वं प्रलापः शिरसोऽतिरुक् ।
दुस्सहाश्चान्तररुजा दाहमोहौ हनुग्रहः ॥ २८ ॥
ज्वरार्तिः श्वासरोधश्च कृच्छ्रे स्युः कण्ठकुब्जके ।
देहे गुरुत्वं बाधिर्यं ज्वाला कण्ठप्रकुञ्चनम् ॥ ॥ २९ ॥
ज्वरः कम्पोऽतिदाहश्च कर्णाधःश्वयथुर्व्रणः ।
ज्वरो रुजा श्वासदुःखं कष्टसाध्ये च कर्णिके ॥ ३० ॥
वागप्रवृत्तिर्बाधिर्यं जिह्वावक्रत्वकुण्ठताः ।
कासश्वासौ वेदनाश्च जिह्वके सान्निपातिके ॥ ३१ ॥
औष्ण्यं रुजा दाहमोहौ शिरःकम्पोऽरतिर्भ्रमः ।
हिध्मा च सहसा तास्ता वेदनाश्चान्तकाभिधे ॥ ३२ ॥
ज्वरातिवेगः शोफश्च च्छर्दिर्लोचननिम्नता ।
बलहानिः स्वरभ्रंशः प्रलापो भुग्ननेत्रके ॥ ३३ ॥
रक्तप्रवृत्तिर्नासाया हिध्मातिसरणं वमिः ।
ज्वरोऽरतिर्दाहमोहौ वैवर्ण्यं रक्तदृष्टिके ॥ ३४ ॥
शीताङ्गे शैत्यमङ्गेषु श्वासो हिध्मा स्वरक्षयः ।
प्रसेकोत्क्लेशवमनं पादघातोऽतिसारिता ॥ ३५ ॥
विप्रलापे विसंज्ञत्वं प्रकम्पोऽतिप्रलापता ।
अभिन्यासे मुखं स्निग्धं पूर्वोक्तानेकलक्षणम् ॥ ३६ ॥
आगन्तुरभिघाताद्यैर्दृत्तापादिश्रमादिभिः ।
महच्छापाभिचाराद्यैर्ग्रहौषधिविषादिभिः ॥ ३७ ॥
अभिघाताच्छ्रमाद्वायुः प्रायो रक्तं प्रदूषयन् ।

सव्यथाशोफवैवर्ण्य सरुजं कुरुते ज्वरम् ॥ ३८ ॥
शापाभिचारजौ घोरावसह्यौ सन्निपातजौ ।
दाहमूर्छाभ्रमस्फोटैः प्रत्यहं वर्धते ज्वरः ॥ ३९ ॥
ग्रहादावपि कोपः स्यात् प्रायशः सान्निपातिकः ।
रसादिधातुगमलैः पुनः पञ्चविधो ज्वरः ॥ ४० ॥

सन्ततः सततोऽन्येद्युस्तृतीयकचतुर्थकौ ।
प्रायस्त्रिदोषजास्ते तु तुल्यदूष्यादिवर्धिताः ॥ ४१ ॥
तत्र दोषास्तु बलिनो विशेषेण रसाश्रिताः ।
सन्ततं निष्प्रतिद्वन्द्वं ज्वरं कुर्युस्सुदुस्सहम् ॥ ४२ ॥
मलं ज्वरोष्मा धातून् वा स शीघ्रं क्षपयेत्ततः ।
रसादिशुद्ध्यशुद्ध्या वा वातपित्तकफक्रमात् ॥ ४३ ॥

चतुर्दशाष्टादश च द्वाविंशतिरुदीरिताः ।
वासरास्त्विह मर्यादा वधायाथ तु मुक्तये ॥ ४४ ॥
शुद्ध्यशुद्ध्योर्ज्वरः कालं दीर्घमप्यनुवर्तते ।
अल्पोऽपि दोषो दूष्यादेर्लब्ध्वाऽन्यतमतो बलम् ॥ ४५ ॥

सविपक्षो ज्वरं कुर्याद्विषमं क्षयवृद्धिभाक् ।
स्वे स्वे काले प्रवृत्तिः स्यात् परकाले निवर्तनम् ॥ ४६ ॥

क्षीणे दोषे ज्वरः सूक्ष्मो रसादिष्वेव लीयते ।
दोषो रक्ताश्रयः प्रायः करोति सततज्वरम् ॥ ४७ ॥
अहोरात्रस्य स द्विः स्यात्सकृदन्येद्युराश्रितः ।
तस्मिन्मांसवहा नाडीर्मेदोनाडीस्तृतीयके ॥ ४८ ॥

चतुर्थके मले मेदोमज्जास्थ्यन्यतमस्थिते ।
अस्थिमज्जोभयगते चतुर्थकविपर्ययः ॥ ४९ ॥



त्र्यहाद्व्यहं ज्वरौ शीतं दाहादिर्दुस्तरस्तयोः ।
मूर्च्छा तृष्णा च शीतादावन्तेऽन्यत्र वमिक्लमौ ॥ ५० ॥
सामश्च पच्यमानश्च पक्वश्चेति त्रिधा ज्वरः ।
ज्वरोपद्रवतीक्ष्णत्वमग्लानिर्बहुमूत्रता ॥ ५१ ॥
न प्रवृत्तिर्न विट् जीर्णा न क्षुत्सामज्वराकृतिः ।
ज्वरवेगोऽधिकं तृष्णा प्रलापः श्वसनं भ्रमः ॥ ५२ ॥
मलप्रवृत्तिरुत्क्लेशः पच्यमानस्य लक्षणम् ।
जीर्णतामविपर्यासात् सप्तरात्रं च लंघनात् ॥ ५३ ॥

देहो लघुर्व्यपगतक्लममोहतापः
पाको मुखे करणसौष्ठवमव्यथत्वम् ।
स्वेदः क्षवः प्रकृतियोगि मनोऽन्नलिप्सा
कण्डूश्च मूर्ध्नि विगतज्वरलक्षणानि ॥ ५४ ॥
गुळदधिनवनीतस्वादुशीताम्लवर्गान्
पृथुकघृतपयोऽन्नस्त्रीसुखायासवातान् ।
शिशिरसलिलसेवाभ्यङ्गदुष्टासवादीन्
बहुविधफलपकान् संत्यजेयुर्ज्वरार्ताः ॥ ५५ ॥

## ज्वरचिकित्सा ।

वमनं कफसंसृष्टे ज्वरेऽन्यत्र विरेचनम् ।
आमाशयस्थो हत्वाग्निं सामो मार्गान् पिधाय यत् ॥ ५६ ॥
विदधाति ज्वरं दोषस्तस्मात् कुर्वीत लंघनम् ।
प्राग्रूपेषु ज्वरादौ वा *कुर्यादादौ विशुद्ध्यहे ॥ ५७ ॥

---

* बलं यत्नेन पालयन् इति पाठभेदः ॥

दोषानुरोधादेकाहं त्र्यहं षडहमेव वा ।
लंघयेद्वा पुनः सामे दोषे क्षीणेऽग्निरेधते ॥ ५८ ॥

तृष्णगल्पाल्पमुष्णाम्बु पिबेद्वातकफज्वरे ।
तत्कफं विलयं नीत्वा तृष्णामाशु निवर्तयेत् ॥ ५९ ॥

उद्रिक्तपित्ते दाहार्ते क्षतक्षीणेऽतिसारिणि ।
ज्वरे मद्यविषोत्थे च षडङ्गकथितं पिबेत् ॥ ६० ॥

अजीर्ण इव शूलघ्नं सामे तीव्ररुजे ज्वरे ।
न पिबेदौषधं तद्धि भूय एवाममावहेत् ॥ ६१ ॥

सोदर्दपीनसश्वासे जङ्घापर्वास्थिशूलिनि ।
वातश्लेष्मात्मके स्वेदः प्रशस्तः स्यान्न चेष्यते ॥ ६२ ॥

शुद्धवातज्वरागन्तुजीर्णज्वरिषु नेष्यते ।
जातलङ्घितालिङ्गं तु तं पेयाभिरुपाचरेत् ॥ ६३ ॥

यथास्वौषधसिद्धाभिर्ज्वरो यावन्मृदुर्भवेत् ।
तस्याग्निर्दीप्यते ताभिः समिद्भिरिव पावकः ॥ ६४ ॥

प्राग्लाजपेयां सुजरां सशुण्ठीधान्यपिप्पलीम् ।
सृष्टविड्बहुमूत्रो वा सशुण्ठीमाक्षिकां हिमाम् ॥ ६५ ॥

वस्तिपार्श्वशिरश्शूली व्याघ्रीगोक्षुरसाधिताम् ।
पृश्निपर्णीबलाबिल्वनागरोत्पलधान्यकैः । ॥ ६६ ॥

सिद्धां ज्वरातिसार्यम्लां क्षीरसैन्धवडाडिमैः ।
ह्रस्वेन पञ्चमूलेन हिध्मारुक्श्वासकासवान् ॥ ६७ ॥

पञ्चमूलेन महता कफार्तो यवसाधिताम् ।
विबद्धवर्चाः सयवां पिप्पल्यामलकैः कृताम् ॥ ६८ ॥

एवं पक्वेषु दोषेषु कषायं शमनं पिबेत् ।



धान्याकशुण्ठीद्वितयैकभाग-
सिद्धं जलं दाहतृडग्निमान्द्यैः ।
युक्तं निहन्यात्तरुणज्वरं तत्-
कल्कप्रयुक्ताम्बु तथा घनाद्यैः ॥ ६९ ॥

मुस्तया पर्पटं युक्तं शुण्ठ्या दुस्पर्शकेन वा ।
वाळकोशीरपाठा वा तिक्ता मुस्तामृतौषधम् ॥ ७० ॥

ज्वरघ्ना दीपनाश्चैते कषाया दोषपाचनाः ।
तृष्णारुचिप्रशमना मुखवैरस्यनाशनाः ॥ ७१ ॥

पुनर्मुस्तापर्पटाद्यं पिबेद्वा पाचनामृतम् ।
तोयतोयदमुख्यं वा वाते सैन्धवमिश्रितम् ॥ ७२ ॥

पित्ते क्षौद्रं सिता वाथ कफे दद्याच्च पिप्पलीम् ।
दुरालभाद्यममृतापूर्वं पाठादिकं तथा ॥ ७३ ॥

अमृतामलकक्काथं पिबेन्मुस्तोत्पलादिकम् ।
तथा मृद्वीकनागादित्रयं वा पित्तजे ज्वरे ॥ ७४ ॥

व्याघ्रीदुरालभाद्यं वा पथ्याकट्फलपूर्वकम् ।
पिबेत्तिक्तानिशापूर्वत्रितयान्यतमं कफे ॥ ७५ ॥

बाल्यादिकाले वातादिज्वरे सर्वत्र चेष्यते ।
चूर्णिता कथिता वापि ससिता कटुरोहिणी ॥ ७६ ॥

वाते रास्नायुता वा सा कफे वा नागरान्विता ।
ज्वरे संसर्गजेऽप्युक्तान्योगान्युक्त्यैव योजयेत् ॥ ७७ ॥

गोकर्णकबला दर्भा ससिता वातपित्तजे ।
ज्वरेऽश्वदंष्ट्रापूर्वं वा पुनर्वातकफोद्भवे ॥ ७८ ॥

जङ्घापर्वास्थिशूलाढ्ये स्वेदश्चापि प्रशस्यते ।
दद्यात् पर्पटकाब्दाद्यं तथा पित्तकफोद्भवे ॥ ७९ ॥

कटुकाविजयार्थं च कृष्णाव्याघ्रयाद्यमेव वा ।
वृषपुष्पच्छदरसः शर्करामाक्षिकान्वितः ॥ ८० ॥

पित्तश्लेष्मज्वरं हन्ति श्वासासृक्कामिलान्वितम् ।
सांन्निपातज्वरे पूर्वं कुर्यादाशु कफापहाम् ॥ ८१ ॥

चिकित्सां श्लेष्मणि क्षीणे नाशयेत् पित्तमारुतौ ।
दारुनागरपूर्वं वा बृहत्यादिगणं तथा ॥ ८२ ॥

व्याघ्र्यादिकं गणं दद्यादमृतोत्तरमेव वा ।
छिन्नोद्भवादिकं वापि दोषौषधविभागवित् ॥ ८३ ॥

सन्निपातज्वरे तीक्ष्णं गण्डूषं कवळं तथा ।
दुरालभादिकाथान् वा क्रमाद्दद्यात्त्रयोदश ॥ ८४ ॥

त्रयोदशसु भेदेषु सन्निपातोद्भवेष्वपि ।
अथवा सन्निपातेषु सर्वत्रापि प्रकल्पयेत् ॥ ८५ ॥

त्र्यायन्त्यादिं कणादिं वा जयादिं वा यथोचितम् ।
लोहितण्डादितैलेन लेपं सन्धिषु कल्पयेत् ॥ ८६ ॥

जिह्वालेपं मूर्धलेपं धूममञ्जननावने ।
प्रयोजयेद्यथावस्थं भजेच्च परमेश्वरम् ॥ ८७ ॥

सन्निपातज्वरस्यान्ते कर्णमूले सुदारुणः ।
शोफः संजायते तेन कश्चिदेव विमुच्यते ॥ ८८ ॥

रक्तावसेचनैः शीघ्रं सर्पिःपानैश्च तं जयेत् ।
प्रदेहैः कफपित्तघ्नैर्नावनैः कवळग्रहैः ॥ ८९ ॥

पक्वे विपाट्य मतिमान् व्रणवत्समुपाचरेत् ।
अभिघातादिजागन्तौ वातपित्तहराः क्रियाः ॥ ९० ॥

हृत्तापादौ तु मरुतः क्रियान्येषु त्रिदोषहृत् ।
सन्ततादौ तु विषमे कुर्याद्दोषविभागवित् ॥ ९१ ॥



पटोलकटुकामुस्ताप्राणदामधुकैः कृताः ।
त्रिचतुःपञ्चशः काथा विषमज्वरनाशनाः ॥ ९२ ॥

क्रमात् कलिङ्गकादींश्च पञ्चभाङ्ग्र्यादिकं तथा ।
अश्वत्थवल्कलकाथः सदाहं विषमज्वरम् ॥ ९३ ॥

हन्याच्चिरोत्थमचिरात्सातिसारं विशेषतः ।
मनोह्वा सैन्धवं कृष्णातैलेन नयनाञ्जनम् ॥ ९४ ॥

शीतज्वरस्यागमने पाययेत्कोष्णवारिणा ।
जीरकव्योषलशुनं लशुनं वा सनागरम् ॥ ९५ ॥

काथं कटङ्कटेर्यांशं विष्णुक्रान्त्यभयाकृतम् ।
शुण्ठीकट्फलजं वापि दद्याच्छीतादिके ज्वरे ॥ ९६ ॥

आरण्यतुळसीमूलपूर्वं वा शीतिकाहरम् ।
ग्रन्थिकाद्युद्भवं वापि दद्याद्दोषानुरोधतः ॥ ९७ ॥

मरिचं चूर्णितं दध्ना दद्याच्छीतज्वरापहम् ।
पित्तज्वरेऽधिकान् काथान् दाहादौ शीतळान् पिबेत् ॥ ९८ ॥

पद्मरम्भादळे शय्या शीता लेपाश्च मारुताः ।
चन्द्रिकाप्रोणनकाथा दाहादिज्वरनाशनाः ॥ ९९ ॥

जीर्णज्वरे घृतं दद्यान्महाषट्पलसंज्ञितम् ।
कल्याणकं घृतं तद्वदिन्दुकान्तं च योजयेत् ॥ १०० ॥

सहदेवीरसोद्भूतं तैलं लाक्षाद्यमेव वा ।
अभ्यङ्गे जीर्णजूर्तीनां फेनोशीरादिकं तथा । ॥ १०१ ॥

आमाभिभूतकोष्ठस्य क्षीरं विषमहेरिव ।
जीर्णज्वरस्य क्षीणस्य क्षीरं स्यादमृतोपमम् ॥ १०२ ॥

अश्वत्थाङ्कुरसंसिद्धं क्षीरं पेयां तदाधिकम् ।
सहदेवीखळं दद्याचिरिविल्वादिकं खळम् ॥ १०३ ॥
स्नानं ज्वरापहजले क्रमात्तमथ बृंहयेत् ।

इति हृदयप्रिये अष्टादशोऽध्यायः ।

---

# एकोनविंशोऽध्यायः ।

---

## रक्तपित्तनिदानम् ।

---

॥ अथातो रक्तपित्तनिदानं व्याख्यास्यामः ॥

भृशोष्णतीक्ष्णकट्वम्ललवणादिविदाहिभिः ।
कोद्रवोद्दाळकैश्चान्नैस्तद्युक्तैरतिसेवितैः ॥ १ ॥
कुपितं पित्तळैः पित्तं द्रवं रक्तं च मूर्च्छिते ।
ते मिथस्तुल्यरूपत्वमागम्य व्याप्नुतस्तनुम् ॥ २ ॥
प्राग्रूपं तस्य नेत्रादौ पीतलोहितनीलता ।
शिरोगुरुत्वमरुचिः शीतेच्छा धूमकोऽम्लकः ॥ ३ ॥
कासश्वासौ भ्रमश्छर्दिर्मुखे रक्तामगन्धता ।
ऊर्ध्वं नासाक्षिकर्णास्यैर्मेढ्रयोनिगुदैरधः ॥ ४ ॥



कुपितं रोमकूपैश्च समस्तैस्तत्प्रवर्तते ।
ऊर्ध्वं साध्यमथो याप्यमसाध्यमुभयाश्रयम् ॥ ५ ॥
ऊर्ध्वं कफादधो वाताद्द्वयादुभयायनम् ।
रोमकूपेषु चोद्भूतमसाध्यं हि त्रिदोषजम् ॥ ६ ॥
रक्तदोषानुगमनं सिरास्त्र इव लक्षयेत् ।

## रक्तपित्तचिकित्सा ।

---

वर्जयेत् पटुकट्वम्लव्यायामं चिन्तनं श्रमम् ॥ ७ ॥
ऊर्ध्वरक्तं विरेकेण वमनेन त्वधोगतम् ।
शमनैर्बृंहणैश्चान्यच्चिकित्सेदाशु युक्तितः ॥ ८ ॥
ऊर्ध्वप्रवृत्ते शमने रसौ तिक्तकषायकौ ।
उपवासश्च निश्शुण्ठीषडङ्गोदकपायिनः ॥ ९ ॥
अधोगे रक्तपित्ते तु बृंहणो मधुरो रसः ।
फलयुक्तेन वमनं त्रिवृद्युक्तं विरेचनम् ॥ १० ॥
त्रिवृत्समसितां दद्यात् पिप्पलीपादसंयुताम् ।
विरेकायाविपत्तिं वा त्रिवृद्द्विगुणसंयुताम् ॥ ११ ॥
आरग्वधेन धात्र्या वा त्रिवृता पथ्ययाथवा ।
विरेचनं प्रयोक्तव्यं शर्करामाक्षिकोत्तरम् ॥ १२ ॥
शर्करामधुसंयुक्तं केवलो वा शृतोऽपि वा ।
वृषः सद्यो जयत्यस्रं स ह्यस्य परमौषधम् ॥ १३ ॥
दुरालभायाः क्वाथस्तु रक्तपित्तविनाशनः ।
आटरूषकपूर्वो वा द्राक्षायश्चोर्ध्वगे हितः ॥ १४ ॥

वाशाद्यश्चन्दनाद्यश्च शतावर्यादिकं तथा ।
ह्रस्वेन पञ्चमूलेन जलश्चाभीरुणाथवा ॥ १५ ॥
सिद्धं क्षीरं प्रशमयेत् पित्तासृङ्मूत्रमार्गगम् ।
शङ्खगैरिकयोः कल्कौ धातक्या मधुकस्य वा ॥ १६ ॥
घ्राणात्स्रुतेऽसृजि प्रोक्तं नारीक्षीरेण नावनम् ।
नस्यं डाडिमपुष्पोत्थै रसैर्दूर्वोद्भवैश्च वा ॥ १७ ॥
लिह्याच्चन्दनकल्कं च नवनीतेन संयुतम् ।
वटाङ्कुरक्षीरपक्वं पिष्टं वा नवनीतवत् ॥ १८ ॥
दूर्वारसं सधारोष्णं क्षीरं वाशाशृतं पिबेत् ।
पारन्तीपुष्पचूर्णं च लिह्याद्वा मधुमिश्रितम् ॥ १९ ॥
पेयं वृषघृतं चापि घृतं नीलोत्पलादिकम् ।
मोदकत्त्वकृतं तैलं यथावस्थं प्रयोजयेत् ॥ २० ॥
शालिषष्टिकनीवारकोरदूषप्रियङ्गवः ।
भक्ष्याः पित्तासृजि हिमैर्लेपोऽभ्यङ्गश्च शस्यते ॥ २१ ॥
क्वाथपेयादिकं रक्ते क्षीरेणाजेन कल्पयेत् ।
नित्यं रक्तप्रशान्त्यर्थं गणेशं च प्रपूजयेत् ॥ २२ ॥

## असृग्दरनिदानम् ।

---

शोकोपवासादतिमैथुनाच्च
विदाहिभिश्चास्रमतीव दुष्टम् ।
प्रवर्तते योन्ययनादकालेऽ-
प्यसृग्दरं तं प्रदरं च विद्यात् ॥ २३ ॥



वातात्सशूलं रुधिरं पित्तान्नीलं ज्वरान्वितम् ।
कफाच्छ्वेतं त्रिलिङ्गं तु त्याज्यं मूर्च्छाज्वरान्वितम् ॥ २४ ॥

## असृग्दरचिकित्सा ।

---

तच्छान्त्यै पयसः पानं शृतस्य ससितामधु ।
नालिकेरप्रसूनैर्वा जपया बलयापि वा ॥ २५ ॥
प्रसाधितमिदं वारि वारयेत्प्रदराद्भयम् ।
खदिराद्यं पिबेत्क्वाथं समधुक्षीरिवल्कजम् ॥ २६ ॥
तद्वन्मुस्तामृताद्यं वा चूर्णं सौवर्चलादिकम् ।
धात्र्यादिकं घृतं माषघृतं जम्बूघृतं पिबेत् ॥ २७ ॥
पारन्तीजपयोः पुष्पस्वरसं मधुना पिबेत् ।
श्वेतदेवीरसं दद्यात् केरीपुष्परसं तथा ॥ २८ ॥
तिलं रात्रौ जले मग्नं क्षीरे पिष्ट्वा पिबेत् प्रगे
चूर्णं सरसिजाद्यं वा तीक्ष्णोष्णादि च वर्जयेत् ॥ २९ ॥

## अस्थिस्रावनिदानम् ।

---

अस्थिस्रावनिदानं स्यादसृग्दरनिरूपितम् ।
तत्र वातेऽतिशूलं स्यात् पित्ते पीतं सशोणितम् ॥ ३० ॥
कफे घनं तन्तुमच्च मिश्रं स्याद्दोषमिश्रणात् ।
मुसलिं मुस्तया पिष्ट्वा धारोष्णेन पिबेत् प्रगे ॥ ३१ ॥
बलामुसल्योः पेयां च सक्षीरां पाययेत् प्रगे ।
मुसल्याद्युद्भवं क्वाथं पारन्तीपुष्पजं खलम् ॥ ३२ ॥
मत्स्याक्ष्युत्थं खलं वाद्यादभ्यज्याच्चानुवासरम् ।
असृग्दरोदितं सर्वमास्थिस्रावेऽपि शस्यते ॥ ३३ ॥

## कासनिदानम् ।

पञ्च कासाः स्मृता वातपित्तश्लेष्मक्षतक्षयात् ।
क्षयायोपेक्षिताः सर्वे बलिनश्चोत्तरोत्तरम् ॥ ३४ ॥
तेषां भविष्यतां रूपं कण्ठे कण्डूररोचकः ।
शूकपूर्णाभकण्ठत्वं तत्राधो विहतोऽनिलः ॥ ३५ ॥
ऊर्ध्वं प्रवृत्तः प्राप्योरस्तस्मिन् कण्ठे च संसजन् ।
शिरःस्रोतांसि संपूर्य याति वक्त्रात्सघुर्घुरम् ॥ ३६ ॥
कुपितो वातलैर्वायुः शुष्कोरःकण्ठवक्त्रताम् ।
हृत्पार्श्वोरःशिरःशूलमोहक्षोभस्वरक्षयान् ॥ ३७ ॥
करोति शुष्ककासं च शाम्येत् कृच्छ्रात्त्यजन् कफम् ।
पित्तात् पीताक्षिकफता तिक्तास्यत्वं ज्वरो भ्रमः ॥ ३८ ॥
पित्तासृग्वमनं तृष्णा वैस्वर्यं धूमकोऽम्लकः ।
प्रततं कासवेगेन ज्योतिषामिव दर्शनम् ॥ ३९ ॥
कफादुरोऽल्परुङ्मूर्ध्नि हृदयं स्तिमितं गुरु ।
कण्ठोपलेपः सदनं पीनसच्छर्दिरोचकाः ॥ ४० ॥
रोमहर्षो घनस्निग्धश्वेतश्लेष्मप्रवर्तनम् ।
युद्धाद्यैः साहसैस्तैस्तैः सेवितैरयथाबलम् ॥ ४१ ॥
उरस्यन्तःक्षते वायुः पित्तेनानुगतो बली ।
कुपितः कुरुते कासं कफं तेन सशोणितम् ॥ ४२ ॥
शुष्कं बहु विवर्णं च ग्रीवेद्धक्षोगदार्तिमान् ।
पर्वभेदज्वरश्वासतृष्णावैस्वर्यकम्पवान् ॥ ४३ ॥
पार्श्वशूली च तेनास्य रुचिवह्निबलक्षयः ।
क्षीणस्य सासृङ्मूत्रत्वं स्याच्च पृष्ठकटीग्रहः ॥ ४४ ॥



वायुप्रधाना दोषास्तु कुपिता यक्ष्महेतुभिः ।
कुर्वन्ति कासं क्षयिणः ष्ठीवेत्तेन कफं मुहुः ॥ ४५ ॥
विस्रं पूयोपमं पूति बहुवर्णं च दुर्बलः ।
लुप्येते इव पार्श्वे च हृदयं पततीव च ॥ ४६ ॥
अकस्मादुष्णशीतेच्छा बह्वाशित्वं बलक्षयः ।
स्निग्धप्रसन्नवक्त्रत्वं क्षयोक्ताखिललक्षणम् ॥ ४७ ॥
कासौ क्षयक्षतोद्भूतावसाध्यौ दुर्बलस्य हि ।
साध्यावन्यस्य साध्यस्यात्साध्या दोषैः पृथक्त्रयः ॥ ४८ ॥
मिश्रा याप्या द्वयास्सर्वे जरसा स्थविरस्य च ।
कासाच्छ्वासक्षयच्छर्दिस्वरसादादयो गदाः ॥ ४९ ॥
भवन्त्युपेक्षितायस्मात्तस्मात्तं त्वरया जयेत् ।

## कासचिकित्सा ।

केवलानिलजं कासं स्नेहैरादावुपाचरेत् ।
वातघ्नैः स्वेदनाभ्यङ्गैः पेयायूषरसादिभिः ॥ ५० ॥
सपित्तं तु घृतैरौर्ध्वभक्तिकैः पयसा पुनः ।
जयेच्च सकफं स्नेहविरेकाद्यैः कफापहैः ॥ ५१ ॥
गुळूच्यादिघृतं वाते क्षाराद्यं वा विपाचयेत् ।
विदार्याद्यं च रास्नाद्यं यथावस्थं प्रयोजयेत् ॥ ५२ ॥
दशमूलरसे पेयां पञ्चकोलगुळान्विताम् ।
पिबेत् समतिलां पेयां क्षैरेयीं वा ससैन्धवाम् ॥ ५३ ॥
शर्कराद्यैर्घृतं पित्ते चूर्णं क्वाथं च तैः पिबेत् ।
लेहः पित्ते सिताद्राक्षाधात्रीक्षौद्रहिमोत्पलैः ॥ ५४ ॥

सकफे साव्दमरिचः सघृतः सानिले हितः ।
द्राक्षां कणां पञ्चमूलं तृणाख्यं च पचेज्जले ॥ ५५ ॥

क्षीरं वा तेन पेयां वा पिबेत् समधुशर्कराम् ।
कफकासी पिबेदादौ सुरकाष्ठात् प्रदीपितात् ॥ ५६ ॥

स्नेहं परिस्रुतं व्योषयवक्षारावचूर्णितम् ।
मधुना मरिचं लिह्यान्मधुनैव च जोङ्गकम् ॥ ५७ ॥

पृथग्रसांश्च मधुना व्याघ्रीवार्ताकभृङ्गजान् ।
कासघ्नस्य च वाशाया भार्ग्याश्च सुरसस्य च ॥ ५८ ॥

उरस्यन्तः क्षते सद्यो लाक्षां क्षौद्रयुतां पिबेत् ।
इक्ष्वालिकाविसग्रन्थिपद्मकेसरचन्दनैः ॥ ५९ ॥

शृतं पयो मधुयुतं संधानार्थं पिबेत् क्षती ।
गुळिकां च मधूकाद्यां कूश्माण्डकरसायनम् ॥ ६० ॥

रसायनमथागस्त्यमजाक्षीरं च शीलयेत् ।
विधिश्च यक्ष्मपित्तास्रविहितः शस्यते हिते ॥ ६१ ॥

क्षतकासहितं सर्वं क्षयकासेऽपि योजयेत् ।
शम्याकेन त्रिवृतया मृद्वीकरसयुक्तया ॥ ६२ ॥

तिल्वकस्य कषायेण विदारीस्वरसेन वा ।
सर्पिः सिद्धं पिबेद्युक्त्या क्षीणदेहो विशुद्धये ॥ ६३ ॥

कुण्डलीमूलमरिचपथ्यासिद्धं जलं पिबेत् ।
पञ्चकासाग्निसदनश्वासहृल्लासपीडितः ॥ ६४ ॥

वृषौषधाभ्यां वृषपिप्पलीभ्यां
वृषोषणाभ्यां च कृताः कषायाः ।
क्रमेण वातादिसमुद्भवेषु
कासेषु भैषज्यमुदाहरन्ति ॥ ६५ ॥



दशभिर्मरिचैः पथ्यामेकां कोष्णोदके पिबेत् ।
हरीतक्यादिगुळिकां कर्पूराद्यं च चूर्णितम् ॥ ६६ ॥

तालीसाद्यं मोदकं च लिह्याद्वा पद्मकादिकम् ।
कफेन रुद्धे हृत्कोष्ठे कासी धूमानिमान् पिबेत् ॥ ६७ ॥

मनश्शिलाबलासाश्वगन्धात्वक्क्षीरिनागरैः ।
वर्तिं कृत्वा पिबेद्धूमं जीवनीयानुपः क्षती ॥ ६८ ॥

पिष्ट्वा मनश्शिलां तुल्यामार्द्रया वटशृङ्गया ।
ससर्पिष्कं पिबेद्धूमं पूर्ववत् क्षतकासवान् ॥ ६९ ॥

मनश्शिलाद्यं धूमं च सर्वकासहरं पिबेत् ।
कार्पासास्थ्यादिपद्मस्थाश्चतस्रो वर्तयो हिताः ॥ ७० ॥

निर्गुण्डीरसजं तैलं तेकराजोद्भवं पिबेत् ।
अष्टपत्रोद्भवं वापि पुनरभ्यङ्गकर्मणि ॥ ७१ ॥

दद्याद्बलाश्वगन्धाद्यं तैलं प्रह्लादनाभिधम् ।

इति हृदयप्रिये रक्तपित्तप्रदरास्थिस्रावकासचिकित्सितं नाम
एकोनविंशोऽध्यायः

# विंशोऽध्यायः ।

## श्वासनिदानम् ।

॥ अथातः श्वासनिदानं व्याख्यास्यामः ॥

कासवृद्ध्या भवेच्छ्वासो ज्वरपाण्डूदरादिभिः ।
वातादिकोपनैर्वापि मर्मघाताद्विषादपि ॥ १ ॥

क्षुद्रकस्तमकश्छिन्नो महानूर्ध्वश्च पञ्चमः ।
कफोपरुद्धगमनः पवनो विष्वगास्थितः ॥ २ ॥

प्राणोदकान्नवाहीनि दुष्टः स्रोतांसि दूषयन् ।
उरस्थः कुरुते श्वासमामाशयसमुद्भवम् ॥ ३ ॥

प्राग्रूपं प्राणवैगुण्यमानाहः पार्श्वहृद्रुजः ।
तत्रायासोद्भवः क्षुद्रः स्वयंसंशमनो मरुत् ॥ ४ ॥

प्रतिलोमं सिरा गच्छन्नुदीर्य पवनः कफम् ।
शिरो ग्रीवामुरः पार्श्वे पीडयन् श्वासमीरयेत ॥ ५ ॥

सनादं तीव्रवेगं च पीनसारुचितृड्युतः ।
प्रताम्येत्तस्य वेगेन निष्ठ्यूतान्ते क्षणं सुखी ॥ ६ ॥

कृच्छ्राच्छयानः श्वसिति निषण्णः स्वास्थ्यमृच्छति ।
शीतैर्वातैः श्लेष्मलैश्च वर्धते तमकस्तु सः । ॥ ७ ॥

स एव ज्वरमूर्च्छावान् शाम्येत् प्रतमको हिमैः ।
छिन्नाच्छ्वसिति विच्छिन्नं मर्मभेदरुजार्दितः ॥ ८ ॥



सस्वेदमूर्च्छः सानाहो बस्तिदाहनिरोधवान् ।
अधोदृग्विप्लुताक्षश्च मुह्यन् रक्तैकलोचनः ॥ ९ ॥

शुष्कास्यः प्रलपन् दीनो नष्टच्छायो विचेतनः ।
महता तु महानादो दीर्घं श्वसिति नष्टधीः ॥ १० ॥

निश्चेष्टो बद्धविण्मूत्रो विभ्रान्तनयनाननः ।
वक्षः समाक्षिपन् शुष्ककण्ठो मुह्यन् पुनःपुनः ॥ ११ ॥

दीर्घमूर्ध्वं श्वसित्यूर्ध्वान्न च प्रत्याहरत्यधः ।
श्लेष्मावृतमुखस्रोताश्चोर्ध्वदृङ्मर्मपीडितः ॥ १२ ॥
एते सिध्येयुरव्यक्ता व्यक्ताः प्राणहरा ध्रुवम् ।

## हिध्मानिदानम् ।

श्वासैकहेतुप्राग्रूपसंख्याप्रकृतिसंश्रयाः ।
हिध्मा भक्तोद्भवा क्षुद्रा यमला महतीति च ॥ १३ ॥
गम्भीरा चात्र रूक्षाद्यैरन्नैर्वातोद्भवान्नजा ।
सात्म्यान्नपानैः शाम्येच्च श्रमाज्जत्रूद्भवा पुनः ॥ १४ ॥
क्षुद्रा श्रमादेधते च भुक्ते याति च मार्दवम् ।
यमला यमलैर्वेगैश्चिरादायाति वर्द्धते ॥ १५ ॥
अन्ने जीर्यति जीर्णे च शिरोग्रीवां च कम्पयेत् ।
आध्मानच्छर्द्यतीसारनेत्रविप्लुतिजृम्भिणः ॥ १६ ॥
महती स्यान्महावेगा महाशब्दा महाबला ।
स्तब्धभ्रूशंखयुग्मस्य साश्रुविप्लुतचक्षुषः ॥ १७ ॥
वाग्देहस्तम्भनं तत्र मर्मपीडा विसंज्ञता ।
पृष्ठतो नमनं चैव गम्भीरा स्यात्तथापि तु ॥ १८ ॥

गम्भीरेणानुनादेन नाभिपक्वाशयोद्भवा ।
अङ्गप्रसारणं जृम्भां कुर्वती तासु साधयेत् ॥ १९ ॥
आद्ये द्वे वर्जयेदन्त्ये सर्वालिङ्गां च वेगिनीम् ।
हिध्माश्वासौ नृणां प्रायो मृत्युकाले कृतालयौ ॥ २० ॥

## श्वासहिध्माचिकित्सा ।

---

अथ कुर्यात्तयोराशु चिकित्सां साधु साध्ययोः ।
हेत्वादीनां समानत्वाच्चिकित्सायाश्च तुल्यता ॥ २१ ॥
स्निग्धं लवणतैलेन पूर्वं स्वेदैरुपाचरेत् ।
स्रोतस्सु ग्रथितं स्वेदाद् द्रुतं कोष्ठगतं कफम् ॥ २२ ॥
निर्हरेच्च सुखं तेन चरत्यविहतोऽनिलः ।
एते हि कफसंरुद्धगतिप्राणप्रकोपजाः ॥ २३ ॥
तस्मात्तन्मार्गशुद्ध्यर्थमूर्ध्वाधःशोधनं हितम् ।
अशान्तौ शुद्धदेहस्य धूमैर्लीनमलं हरेत् ॥ २४ ॥
मधूच्छिष्टं सर्जरसं शृङ्गं वागरुचन्दनम् ।
गुल्गुलुं वा मनोह्वां वा घृते धूमाय कल्पयेत् ॥ २५ ॥
हरिद्रादिकवर्तिं वा स्वेदायेग्यमपि क्षणम् ।
स्वेदयेत्ससिताक्षीरसुखोष्णस्नेहसेचनैः ॥ २६ ॥
उत्कारिकोपनाहैश्च कषायाद्यांश्च पाययेत् ।
क्वाथं भार्ङ्गीकणाद्यं च बलाजीरकपूर्वकम् ॥ २७ ॥
अभयाव्योषपूर्वं वा दशमूलादिकं तथा ।
शुण्ठीलशुननिर्यूहं हिङ्गुसैन्धवचूर्णितम् ॥ २८ ॥



हिध्माश्वासप्रतिश्यायशूलवातामयी पिबेत् ।
पिप्पल्यादिकषायं च दशमूलादिकं पयः ॥ २९ ॥
चतुष्पाच्चर्मरोमास्थिखुरशृङ्गोद्भवां मषीम् ।
तथैव वाजिगन्धाया लिह्याच्छ्वासी कफोल्बणः ॥ ३० ॥
अर्धांशेन पिबेत्सर्पिः क्षीरेण पटुनाथवा ।
अजाविण्मूत्रमाघ्राय हिध्मावान् सुखमाप्नुयात् ॥ ३१ ॥
अपामार्गनलाच्चूर्णं लिह्याद्वा मधुनाथवा ।
जीवन्त्याद्युद्भवं चूर्णं द्रोणपुष्पयुतं पयः ॥ ३२ ॥
जीरकं द्रोणपुष्पी च विल्वमूलं च तैः शृतम् ।
क्षीरं सितायुतं दद्याद्धिक्कायां तु मुहुर्मुहुः ॥ ॥ ३३ ॥
बलात्रयादिकाथं वा श्वासहिध्मादिनाशनम् ।
कर्शनं बृंहणं चापि विदधीतान्तरान्तरा ॥ ३४ ॥
जेतुं बलासं वातं च श्वासहिध्माप्रपीडिते ।

इति हृदयप्रिये श्वासहिध्माचिकित्सितं नाम
विंशोऽध्यायः ।

# एकविंशोऽध्यायः ।

## राजयक्ष्मानिदानम् ।

॥ अथातः राजयक्ष्मनिदानं व्याख्यास्यामः ॥

अनेकरोगानुगतो बहुरोगपुरोगमः ।
राजवद्राजयक्ष्मा स्याद्देहभेषजहानिकृत् ॥ १ ॥

साहसं वेगसंरोधः शुक्रौजःस्नेहसंक्षयः ।
अन्नपानविधित्यागश्चत्वारस्तस्य हेतवः ॥ २ ॥

तैरुदीर्णोऽनिलः पित्तं कफं चोदीर्य सर्वतः ।
शरीरसन्धीनाविश्य तान् सिराश्च प्रपीडयन् ॥ ३ ॥

मुखानि स्रोतसां रुध्वा तथैवातिविवृत्य वा ।
सर्पन्नूर्ध्वमधस्तिर्यग्यथास्वं जनयेद्गदान् ॥ ४ ॥

रूपं भविष्यतस्तस्य प्रतिश्यायो भृशं क्षवः ।
प्रसेको मुखमाधुर्यं सदनं वह्निदेहयोः ॥ ५ ॥

हृल्लासश्छर्दिररुचिरश्नतोऽपि बलक्षयः ।
पादशोफोऽक्षिशुक्लत्वनखरोमाभिवर्द्धनम् ॥ ६ ॥

स्त्रीसक्तिश्चाथ जायन्ते रूपाण्येकादशास्य च ।
पीनसश्वासकासांसमूर्द्धस्वररुजोऽरुचिः ॥ ७ ॥

ऊर्ध्वं स्रंसो विशः शोषो वाधश्छर्दिश्च कोष्ठगे ।
तिर्यक्स्थे पार्श्वरुग्दोषे सन्धिगे भवति ज्वरः ॥ ८ ॥



तत्र वाताच्छिरःपार्श्वशूलमंसाङ्गमर्दनम् ।
कण्ठोध्वंसः स्वरभ्रंशः पित्तात् पादास्यपाणिषु ॥ ९ ॥

दाहोऽतिसारस्तृट्च्छर्दिर्मुखगन्धो ज्वरो मदः ।
कफादरोचकश्छर्दिः कासो मूर्धाङ्गगौरवम् ॥ १० ॥

प्रसेकः पीनसः श्वासः स्वरसादोऽल्पवह्निता ।
अल्पवह्नितया तस्य धातूष्माल्पतयापि च ॥ ११ ॥

पच्यते कोष्ठ एवान्नं नैवालं धातुपुष्टये ।
अवष्टब्धः स शकृता केवलं वर्तते क्षयी ॥ १२ ॥

लिङ्गेष्वल्पेष्वपि क्षीणं व्याध्यौषधबलाक्षमम् ।
वर्जयेत्साधयेदेव सर्वेष्वपि ततोऽन्यथा ॥ १३ ॥

## राजयक्ष्मचिकित्सा ।

बलिनो बहुदोषस्य स्निग्धस्विन्नस्य शोधनम् ।
ऊर्ध्वाधो यक्ष्मिणः कुर्यात्सस्नेहं यन्न कर्शनम् ॥ १४ ॥

पयसा फलयुक्तेन मधुरेण रसेन वा ।
सर्पिष्मत्या यवाग्वा वा वमनद्रव्यसिद्धया ॥ १५ ॥

वमेद्विरेचनं दद्यात् त्रिवृच्छ्यामानृपद्रुमान् ।
शर्करामधुसर्पिर्भिः पयसा चाथ बृंहणम् ॥ १६ ॥

लघु हृद्यं दीपनं च षष्टिकाद्यं प्रकल्पयेत् ।
अन्नपानं तथा क्षीरमाजमांसं च शोषजित् ॥ १७ ॥

कणातामलकीवह्निसिद्धः काथो घृतान्वितः ।
वह्निकृत् पीनसहरः क्षतक्षयहरः परम् ॥ १८ ॥

काथं पुनर्नवाद्यं वा पिबेदेलादिकं तथा ।

सपिप्पलीकं सयवं सकुलत्थं सनागरम् ॥ १९ ॥
सदाडिमं सामलकं स्निग्धमाजं रसं पिबेत् ।
तेन षड् विनिवर्तन्ते विकाराः पीनसादयः ॥ २० ॥
कृष्णाद्राक्षासितालेहः क्षयहा क्षौद्रतैलवान् ।
मधुसर्पिर्युतो वाश्वगन्धाकृष्णासितोद्भवः ॥ २१ ॥
शर्करामधुसंयुक्तं नवनीतं लिहन् क्षयी ।
क्षीराशी लभते पुष्टिमतुल्ये वाज्यमाक्षिके ॥ २२ ॥
दशमूलशृतात् क्षीरात् सर्पिर्यदुदियात्नवम् ।
सपिप्पलीकं सक्षौद्रं तच्छूलाभिहरं परम् ॥ २३ ॥
पञ्चभिः पञ्चमूलैर्वा सिद्धं क्षीरं पिबेत् क्षयी ।
सर्पिश्च तत्पयोजातं सर्पिस्तत्क्वाथसाधितम् ॥ २४ ॥
पिबेदेलादिकं सर्पिरश्वगन्धादिकं तथा ।
लिह्याच्छुण्ठ्यादिकं चूर्णं हितं चास्य क्षयोदितम् ॥ २५ ॥
पीतं नागबलासर्पिरागस्त्यं वा रसायनम् ।
अजादिमांसं तद्युक्तविविधौषधसंस्कृतम् ॥ २६ ॥
सर्पिश्च शीलयन्युक्त्या जयेद्धीरश्चिरात् क्षयम् ।
क्षतोक्ततैलैरभ्यक्तं जीवन्त्याद्यैः सुचूर्णितम् ॥ २७ ॥
उद्वर्त्य जीवनीयादिसिद्धैः स्नायात् सुखोदकैः ।

## स्वरसादनिदानम्

दोषैर्व्यस्तैः स[illegible]श्च क्षयात् षष्ठश्च मेदसा ॥ २८ ॥
स्वरसादो भवेत्तत्र क्षामो रूक्षश्चलस्वरः ।
शूकपूर्णाभकण्ठत्वं स्निग्धोष्णोपशयोऽनिलात् ॥ २९ ॥
पित्तात्तालुगळे दाहः शोष उक्तावसूयनम् ।



लिम्पन्निव कफात् कण्ठं मन्दः खुरखुरायते ॥ ३० ॥
स्वरो विबद्धः सर्वैस्तु सर्वलिङ्गः क्षयात् कषेत् ।
धूमायतीव चात्यर्थं मेदसा श्लेष्मलक्षणः ॥ ३१ ॥
कृच्छ्रलक्ष्याक्षरश्चात्र सर्वैरन्त्यं च वर्जयेत् ।

## स्वरसादचिकित्सा ।

स्वरसादे विशेषेण नस्यधूमादि योजयेत् ॥ ३२ ॥
तत्रापि वातजे कोष्णं पिबेदौत्तरभक्तिकम् ।
कासमर्दकवार्ताकीमार्कवस्वरसे घृतम् ॥ ३३ ॥
साधितं कासजित् स्वर्यं सिद्धमार्तगळेन वा ।
तैलं च मधुकद्राक्षापिप्पलीकृमिजित्फलैः ॥ ३४ ॥
हंसपद्याश्च मूलेन पक्वं नस्ये नियोजयेत् ।
क्षीरवृक्षाङ्कुरक्वाथकल्कसिद्धं समाक्षिकम् ॥ ३५ ॥
पित्तोद्भवे हितं सर्पिः शृतशीतं पयोऽपि च ।
प्रपौण्डरीकं मधुकं पिप्पली बृहती बला ॥ ३६ ॥
साधितं क्षीरसर्पिश्च तत्स्वर्यं नावनं परम् ।
द्राक्षाकृष्णाद्यैरम्बु पित्तजस्वरसादनुत् ॥ ३७ ॥
पिबेत् कटूनि मूत्रेण कफजे रूक्षभोजनः ।
कट्फलामलकव्योषं लिह्यात्तिलमधुप्लुतम् ॥ ३८ ॥
व्योषक्षाराग्निचविकाभार्ङ्गीपथ्यामधूनि वा ।
त्वगेलापिप्पलीक्षीरिशर्करा द्विगुणाः क्रमात् ॥ ३९ ॥
चूर्णिता भक्षिताः क्षौद्रसर्पिषा वावलेहिताः ।
स्वर्याः कासक्षयश्वासपार्श्वरुक्कफनाशनाः ॥ ४० ॥
स्वरोपघाते मेदोजे कफवद्विधिरिष्यते ।

सर्वजे क्षयजे वापि प्रत्याख्यायाचरेत् क्रियाम् ॥ ४१ ॥
फलत्रयादिभिः काथः सर्वजस्वरसादजित् ।
श्वासकासोदिताः सर्वाः क्रियाः शस्ताः स्वरक्षये ॥ ४२ ॥
स्निग्धानुभयतः शुद्धान् नस्यधूमादि योजयेत् ।

## अरोचकनिदानम् ।

अरोचको भवेद्दोषैर्जिह्वाहृदयसंस्थितैः ॥ ४३ ॥
सन्निपातेन मनसः संतापेन च पञ्चमः ।
कषायतिक्तमधुरं वातादिषु मुखं क्रमात् ॥ ४४ ॥
सर्वोत्थे विरसं शोकक्रोधादिषु यथामलम् ।

## अरोचकचिकित्सा ।

विचित्रमन्नमरुचौ हितैरुपहितं हितम ॥ ४५ ॥
बहिरन्तर्मृजा चित्तनिर्वाणं हृद्यमौषधम् ।
कालद्वये दन्तशौचं कवळं धूमनावनम् ॥ ४६ ॥
छर्दयेद्वा ऽम्भोभिः पित्ते तु गुळवारिभिः ।
तालीसाद्यं तत्र चूर्णं सकर्पूरसितोपलाः ॥ ४७ ॥
शशाङ्ककिरणाख्याश्च भक्ष्या रुचिकराः परम् ।
आम्रपल्लवतद्वृन्तकाथोऽरोचकनाशनः ॥ ४८ ॥
सैन्धवाढ्यं दधि हितं वातारोचकपीडिते ।
पयः सशर्करं पित्ते तक्रं व्योषयुतं कफे ॥ ४९ ॥
कर्पूरादिकमेलाद्यं यवान्याद्यं च भक्षयेत् ।
क्षाळनैः कवळैश्चापि यथाकालमुपाचरेत् ॥ ५० ॥

इति हृदयप्रिये यक्ष्मस्वरसादारोचकचिकित्सितं नाम एकविंशोऽध्यायः ।

# द्वाविंशोऽध्यायः ।

## छर्दिनिदानम् ।

॥ अथातः छर्दिनिदानं व्याख्यास्यामः ॥

छर्दिर्दोषैः पृथक् सर्वैर्द्विष्टैरर्थैश्च पञ्चभी ।
उदानो विकृतो वायुः सर्वानप्यूर्ध्वमस्यति ॥ १ ॥
तासूत्क्लेशास्यलावण्यप्रसेकारुचयोऽग्रगाः ।
नाभिं पृष्ठं रुजन् वायुः पार्श्वे चाहारमुत्क्षिपेत् ॥ २ ॥
ततोऽल्पाल्पं कषायं च वेगोद्गारयुतं वमेत् ।
पित्तात् क्षारोदकनिभं सास्रं हरितपीतकम् ॥ ३ ॥
कफात् श्वेतं घनं शीतं श्लेष्मतन्तुगवाक्षितम् ।
सर्वलिङ्गं मलैः सर्वै रिष्टोक्ता या च तां त्यजेत् ॥ ४ ॥
पूत्यमेध्याशुचिद्विष्टदर्शनश्रवणादिभिः ।
तप्ते चित्ते हृदि क्लिष्टे छर्दिर्द्विष्टार्थयोगजा ॥ ५ ॥

## छर्दिचिकित्सा ।

आमाशयोत्क्लेशभवाः प्रायश्छर्द्यो हितं ततः ।
लङ्घनं प्रागृते वायोर्यो वमेत् प्रततं बहुः ॥ ६ ॥

बहुदोषो बली तं तु वामयेच्च पुनः क्रमात् ।
द्राक्षाम्बुभिर्वा क्षीरैर्वा हृद्यैर्मद्यैर्विरेचयेत् ॥ ७ ॥

उपवासः प्रियं सात्म्यमन्नं लघु च शस्यते ।
लेह्या रसाः कवलिकारागषाडवपानकाः ॥ ८ ॥

भुक्तमात्रस्य सहसा मुखे शीताम्बुसेचनम् ।
स्नानं सुगन्धिवस्त्राणि हितान्यत्र हितानि च ॥ ९ ॥

हन्ति मारुतजां छर्दिं सर्पिः पीतं ससैन्धवम् ।
स्निग्धं च भोजनं शुण्ठीदधिडाडिमसाधितम् ॥ १० ॥

कोष्णं सलवणं चात्र हितं स्नेहविरेचनम् ।
महौषधादिकं दद्यादजाजीधान्यकादिकम् ॥ ११ ॥

पित्तजायां विरेकार्थं द्राक्षेक्षुस्वरसैस्त्रिवृत् ।
पिबेन्मन्थं यवागूं वा लाजैः समधुशर्करम् ॥ १२ ॥

मृद्भृष्टलोष्टप्रभवं सुशीतं सलिलं पिबेत् ।
धात्रीरसेन शीतं वा तथा मुद्गदळाम्बु वा ॥ १३ ॥

क्वाथं जम्ब्वादिकं वा स्याद्रक्तपित्तोदितं हितम् ।
कफजायां वमेन्निम्बकृष्णापिण्डीतसर्षपैः ॥ १४ ॥

युक्तेन कोष्णतोयेन दुर्बलं चोपवासयेत् ।
लीढं मनश्शिलाकृष्णामरिचं बीजपूरकात् ॥ १५ ॥

स्वरसेन कपित्थाच्च सक्षौद्रेण वमिं जयेत् ।
सन्निपाते तथा मिश्रैरेतैश्छर्दिं निवारयेत् ॥ १६ ॥

हृद्यैर्मनोज्ञैर्मधुरैः छर्दिं द्विष्टार्थजां जयेत् ।
क्वाथः केवलबिल्वोत्थः शुण्ठीबिल्वोद्भवोऽपि वा ॥ १७ ॥

लाजशुण्ठीबिल्वभवः प्रसेकच्छर्दिनाशनः ।
बिल्वधान्यादिकं क्वाथं कार्पासास्थ्यादिचूर्णितम् ॥ १८ ॥



एलाकल्कं तु धान्याम्लसंयुक्तं नस्यमुत्तमम् ।
चन्दनागरुलाजानां धूमं च सघृतं पिबेत् ॥ १९ ॥
गर्भामकृमिजातायां छर्द्यां दोषानुरोधतः ।
चिकित्सेत् कृमिजां विद्यात् क्रिमिहृद्रोगलक्षणैः ॥ २० ॥

## हृद्रोगनिदानम् ।

वातादिभिः पृथक् सर्वैः कृमिदोषाच्च पञ्चधा ।
हृद्रोगस्तत्र वातेन हृच्छून्यं विविधार्तिमत् ॥ २१ ॥
भ्रमः शब्दासहिष्णुत्वं श्वासरोधोऽल्पनिद्रता ।
पित्तात्तृष्णाम्लकः स्वेदो धूमकः पीतता ज्वरः ॥ २२ ॥
श्लेष्मणा साश्मगर्भाभं हृदयं ष्ठीवनारुची ।
सर्वलिङ्गं त्रिभिर्दोषैः क्रिमिभिः श्यावनेत्रता ॥ २३ ॥
तमःप्रवेशो हृल्लासः शोफः कण्डूः कफस्रुतिः ।
हृदयं प्रततं चात्र क्रकचेनेव दार्यते ॥ २४ ॥
चिकित्सेदामयं घोरं तं शीघ्रं शीघ्रकारिणम् ।

## हृद्रोगचिकित्सा ।

हृद्रोगे वातिके वान्तः पिप्पलीसितसर्षपैः ॥ २५ ॥
पिबेत् प्रातर्यवक्षारं सर्पींषि लवणानि वा ।
त्रिभिः स्नेहैः पिबेद्वापि डाडिमाद्यं च चूर्णितम् ॥ २६ ॥
बिल्वादिकं हितं सर्पिस्तथा सौवर्चलादिकम् ।
स्निग्धोष्णैः पानभोज्यैश्च हृद्रोगं वातिकं जयेत् ॥ २७ ॥

सुकुमारं बलातैलमैरण्डं सपयोऽपि वा ।
पैत्ते द्राक्षेक्षुनिर्याससिताक्षौद्रपरूषकैः ॥ २८ ॥
युक्तो विरेको हृद्यः स्यात् क्रमः शुद्धे च पित्तहा ।
लघुशीताशनो द्राक्षापरूपकरसं पिबेत् ॥ २९ ॥
क्वाथं धान्याकशुण्ठ्याद्यं प्रियङ्ग्वाद्यं तथा पिबेत् ।
क्षतपित्तज्वरोक्तं च बाह्यान्तःपरिमार्जनम् ॥ ३० ॥
हृद्रोगे कफजे वान्तः क्षाराम्बुलवणोदकैः ।
वचानिम्बाम्भसा वापि कुलत्थयवभोजनः ॥ ३१ ॥
लिह्याद्वचादिचूर्णं वा पुष्कराह्वादिकं तथा
श्लेष्मगुल्मोदिताज्यानि क्षारांश्च विविधान् पिबेत् ॥ ३२ ॥
क्रिमिहृद्रोगिणं स्निग्धं भोजयेत् पिशितौदनम् ।
दध्युपेतं त्र्यहं पश्चात् साधु चैनं विरेचयेत् ॥ ३३ ॥
क्रिमिघ्नमौषधं सर्वं दद्यादपि यथोचितम् ।
वत्सभाख्यं घृतं दद्यात्तैलं धान्वन्तरं तथा ॥ ३४ ॥
क्वाथं धान्याकशुण्ठ्याद्यं दशमूलादिकं तथा ।
सौवर्चलादिचूर्णं च यथाकालं प्रयोजयेत् ॥ ३५ ॥

## तृष्णानिदानम् ।

---

वातात् पित्तात् कफात्तृष्णाः सन्निपाताद्रसक्षयात् ।
षष्ठी स्यादुपसर्गाच्च वातपित्ते तु कारणम् ॥ ३६ ॥
सर्वासु तत्प्रकोपो हि सौम्यधातुविशोषणात् ।
सर्वदेहभ्रमोत्कम्पतापहृद्रोगमोहकृत् ॥ ३७ ॥



जिह्वामूलगलक्लोमतालुतोयवहाः सिराः ।
संशोष्य तृष्णा जायन्ते तासां सामान्यलक्षणम् ॥ ३८ ॥
मुखशोषो जलातृप्तिरन्नद्वेषः स्वरक्षयः ।
कण्ठोष्ठजिह्वाकार्कश्यं जिह्वानिष्क्रामणं क्लमः ॥ ३९ ॥
मारुतादास्यवैरस्यं शङ्खतोद. शिरोभ्रमः ।
शीताम्बुपानाद्वृद्धिश्च श्रुतिनिद्राबलक्षयः ॥ ४० ॥
पित्तान्मूर्च्छास्यतिक्तत्वं शोषो दाहोऽतिधूमकः ।
कफात्सशूककण्ठत्वमाध्मानच्छर्द्यरोचकाः ॥ ४१ ॥
निद्रा मधुरवक्त्रत्वं सर्वैः स्यात्सर्वलक्षणा ।
तृष्णा रसक्षयोक्तेन लक्षणेन क्षयात्मिका ॥ ४२ ॥
शोषमोहज्वराद्यन्यरोगोत्था तूपसर्गजा ।

## तृष्णाचिकित्सा ।

---

तृष्णासु वातपित्तघ्नो विधिः प्रायेण शस्यते ॥ ४३ ॥
सर्वासु शीतो बाह्यान्तस्तथा शमनशोधनम् ।
दिव्याम्बु शीतं सक्षौद्रं तद्वद्भौमं च तद्गुणम् ॥ ४४ ॥
निर्वापितं तप्तलोष्टकपालसिकतादिभिः ।
सलाजशर्करं ह्रस्वपञ्चमूलजलं पिबेत् ॥ ४५ ॥
शीतेन शीतवीर्यैश्च द्रव्यैः सिद्धेन भोजनम् ।
हिमाम्बुपरिषिक्तस्य पयसाससितामधु ॥ ४६ ॥
मुद्गादीनां तथा यूषैर्जीवनीयरसान्वितैः ।
नस्यं क्षीरं घृतं सिद्धं शीतैरिक्षो रसैस्तथा ॥ ४७ ॥
दाहज्वरोक्ता लेपाद्या निरीहत्वं मनोरतिः

महासरिद्ध्रदादीनां दर्शनश्रवणानि च ॥ ४८ ॥
तृष्णायां पवनोत्थायां सगुळं दधि शस्यते ।
बलांशुमतिमृद्वीकाशारिबापिप्पलीजलम् ॥ ४९ ॥
पुनर्नवादिकाथं वा विदार्याशुद्भवं पिबेत् ।
पित्तजायां सितायुक्तः पकोदुम्बरजो रसः ॥ ५० ॥
तत्काथो वा हितः शीतः शारिबादिगणाम्बु वा ।
द्राक्षाद्यं पञ्चसाराम्बु धान्याकादिकमेव वा ॥ ५१ ॥
कफोद्भवायां वमनं निम्बप्रसववारिणा ।
बिल्वाढकीपञ्चकोलदर्भपञ्चकसाधितम् ॥ ५२ ॥
जलं पिबेद्रजन्या वा सिद्धं सक्षौद्रशर्करम ।
पञ्चकोलाम्बवतिविषाशुण्ठीभ्यां वा कफान्वये ॥ ५३ ॥
काथं धान्याकधान्याद्यं सन्निपातोद्भवां तृषन् ।
जयेद्विमिश्रितैरुक्तैः कुस्तुम्बर्यादि वा पिबत् ॥ ५४ ॥
गुळूच्यादिगणकाथं दद्याद्वा शारिबादिकम ।
क्षयजायां क्षयहितं छागक्षीरं रसं तथा ॥ ५५ ॥
तत्तद्रोगोपसृष्टायां दद्यात्तदनुरोधतः ।
तक्रं च जीवनीयेन सिद्धं शीतं च माहिषम् ॥ ५६ ॥
नस्यार्थं मधुकं द्राक्षा स्तन्यमिक्षुरसं हितम् ।
चन्दनाद्यं तथा तैलं तृष्णार्तस्य प्रकल्पयेत ॥ ५७ ॥

इति हृदयप्रिये छर्दिहृद्रोगतृष्णाचिकित्सितं नाम
द्वाविंशोऽध्यायः ।

# त्रयोविंशोऽध्यायः ।

## मदात्ययनिदानम्

॥ अथातः मदात्ययनिदानं व्याख्यास्यामः ॥

तीक्ष्णोष्णरूक्षसूक्ष्माम्लं व्यवाय्याशुकरं लघु ।
विकाषि विशदं मद्यमोजसोऽस्माद्विपर्ययः ॥ १ ॥
तीक्ष्णादयो विषेऽपि स्युरुत्कर्षात्ते हि मृत्युदाः ।
तीक्ष्णादिभिर्गुणैर्मद्यं मन्दादीनोजसो गुणान् ॥ २ ॥
दशभिर्दश संक्षोभ्य चेतो नयति विक्रियाम् ।
अतस्त्यजन्ति सन्तस्तद्बुद्धिर्हि सकलेष्टदा ॥ २ ॥
नातिमाद्यन्ति बलिनो भुक्ताः सत्त्ववयोयुताः ।
मेदःकफाधिकाः स्निग्धा मद्यनित्या दृढाग्नयः ॥ ४ ॥
विपर्ययेऽतिमाद्यन्ति चत्वारः स्युर्मदात्ययाः ।
दोषैः पृथक् समस्तैश्च मोहः सामान्यलक्षणम् ॥ ५ ॥
विशेषाज्जागरश्वासकम्पमूर्धरुजोऽनिलात् ।
पित्ताद्दाहज्वरस्वेदमोहातीसारतृड्भ्रमाः ॥ ६ ॥
श्लेष्मणा छर्दिहृल्लासनिद्रोदर्दाङ्गगौरवम् ।
सर्वजे सर्वलिङ्गत्वं वक्ष्ये तेषां चिकित्सितम् ॥ ७ ॥

## मदात्ययचिकित्सा ।

यं दोषमधिकं पश्येत्तस्यादौ प्रतिकारयेत् ।
पित्तवाताधिकः प्रायो मदव्याधिर्भवेद्यतः ॥ ८ ॥
क्रियां तदुदितां कुर्यादन्यदोषाविरोधिनीम् ।
हीनमिथ्यातियोगेन यो व्याधिरुपजायते ॥ ९ ॥
समपीतेन तेनैव स मद्येनोपशाम्यति ।
यथा विषस्य नाशः स्याद्यौगिकेन विषेण हि ॥ १० ॥
तत्र वातोल्बणे दद्यान्मद्यं पिष्टकृतं युतम् ।
बीजपूरकवृक्षाम्लकोलडाडिमदीप्यकैः ॥ ११ ॥
यवानीहपुषाजाजीव्योषत्रिलवणार्द्रकैः ।
गोधूममाषविकृतरिद्यात् स्निग्धान् रसांस्तथा ॥ १२ ॥
स्वरसं डाडिमात् क्वाथः पञ्चमूलात् कनीयसः ।
अभ्यङ्गोद्वर्तनस्नानमुष्णं प्रावरणं हितम् ॥ १३ ॥
पित्तोल्बणे बहुजलं शार्करं मधु वा युतम् ।
रसैर्डाडिमखर्जूरभव्यद्राक्षापरूषजैः ॥ १४ ॥
सुशीतं ससितासक्तु योज्यं तादृक् च पानकम् ।
स्वादुवर्गकषायैर्वा युक्तं मद्यं समाक्षिकम् ॥ १५ ॥
तृष्यते चातिबलवद्वातपित्तसमुद्भवे ।
दद्याद् द्राक्षारसं पानं मद्यं वापि बहूदकम् ॥ १६ ॥
मुस्तडाडिमलाजाम्बु जलं वा पर्णिनीश्रृतम् ।
उल्लेखनोपवासाभ्यां जयेत् श्लेष्मोल्बणं पिबेत् ॥ १७ ॥
शीतं शुण्ठीस्थिरोदीच्यदुस्पर्शान्यतमोदकम् ।



## मदादित्रयनिदानम् ।

रजोमोहाहिताहारपराणां स्युस्त्रयो गदाः ॥ १८ ॥
रसासृक्चेतनावाहिस्रोतोरोधसमुद्भवाः ।
मदमूर्च्छायसन्यासा यथोत्तरबलोत्तराः ॥ १९ ॥
मदोऽत्र दोषैः सर्वैश्च रक्तमद्यविषैरपि ।
रूक्षः श्यावोऽरुणो वातात् सकानल्पक्रियावचाः ॥ २० ॥
पित्तेन क्रोधनो रक्तपीताभः कलहप्रियः ।
स्वल्पासंबद्धवाक् पाण्डुः कफाद् ध्यानपरोऽलसः ॥ २१ ॥
सर्वात्मा सन्निपातेन रक्तात् स्तब्धाङ्गदृष्टिता ।
पित्तलिङ्गं च मद्येन विकृतेहास्वराङ्गता ॥ २२ ॥
विषे कम्पोऽतिनिद्रा च सर्वेभ्योऽभ्यधिकश्च सः ।
कार्श्यं श्यावारुणाक्षत्वं मूर्च्छाये मारुतात्मके ॥ २३ ॥
पित्तेन तृष्णादाहाढ्यः सस्वेदः पीतलोचनः ।
कफात्स्तिमितगुर्वङ्गः सहृल्लासप्रसेकवान् ॥ २४ ॥
नीलारुणं पीतरक्तं नीलाभं च नभः क्रमात् ।
पश्यन्मूर्च्छायमाप्नोति त्रिभिः सर्वाकृतिः पुनः ॥ २५ ॥
अपस्मार इवापात्य कुर्यान्निश्चेष्टितं च तम् ।
दोषेषु मदमूर्च्छायाः कृतवेगेषु देहिनाम् ॥ २६ ॥
स्वयमेव च शाम्यन्ति सन्यासो नौषधैर्विना ।
प्राणायतनाश्रितैर्दोषैर्वाङ्मनोभिर्नष्टचेष्टितः ॥ २७ ॥
मृतवत् कफपूर्णास्यः सन्यासान्निपतेन्नरः ।

## मदात्ययचिकित्सा ।

---

यं दोषमधिकं पश्येत्तस्यादौ प्रतिकारयेत् ।
पित्तवाताधिकः प्रायो मदव्याधिर्भवेद्यतः ॥ ८ ॥

क्रियां तदुदितां कुर्यादन्यदोषाविरोधिनीम् ।
हीनमिथ्यातियोगेन यो व्याधिरुपजायते ॥ ९ ॥

समपीतेन तेनैव स मद्येनोपशाम्यति ।
यथा विषस्य नाशः स्याद्यौगिकेन विषेण हि ॥ १० ॥

तत्र वातोल्बणे दद्यान्मद्यं पिष्टकृतं युतम् ।
बीजपूरकवृक्षाम्लकोलडाडिमदीप्यकैः ॥ ११ ॥

यवानीहपुषाजाजीव्योषत्रिलवणार्द्रकैः ।
गोधूममाषविकृतिर्दद्यात् स्निग्धान् रसांस्तथा ॥ १२ ॥

स्वरसं डाडिमात् क्वाथः पञ्चमूलात् कनीयसः ।
अभ्यङ्गोद्वर्तनस्नानमुष्णं प्रावरणं हितम् ॥ १३ ॥

पित्तोल्बणे बहुजलं शार्करं मधु वा युतम् ।
रसैर्डाडिमखर्जूरभव्यद्राक्षापरूषजैः ॥ १४ ॥

सुशीतंससितासक्तु योज्यं तादृक् च पानकम् ।
स्वादुवर्गकषायैर्वा युक्तं मद्यं समाक्षिकम् ॥ १५ ॥

तृष्यते चातिबलवद्वातपित्तसमुद्भवे ।
दद्याद् द्राक्षारसं पानं मद्यं वापि बहूदकम् ॥ १६ ॥

मुस्तडाडिमलाजाम्बु जलं वा पर्णिनीश्रृतम् ।
उल्लेखनोपवासाभ्यां जयेत् श्लेष्मोल्बणं पिबेत् ॥ १७ ॥

शीतं शुण्ठीस्थिरोदीच्यदुस्पर्शान्यतमोदकम् ।



## मदादित्रयनिदानम् ।

---

रजोमोहाहिताहारपराणां स्युस्त्रयो गदाः ॥ १८ ॥
रसासृक्चेतनावाहिस्रोतोरोधसमुद्भवाः ।
मदमूर्च्छायसन्यासा यथोत्तरबलोत्तराः ॥ १९ ॥

मदोऽत्र दोषैः सर्वैश्च रक्तमद्यविषैरपि ।
रूक्षः श्यावोऽरुणो वातात् सक्तानल्पक्रियावचाः ॥ २० ॥
पित्तेन क्रोधनो रक्तपीताभः कलहप्रियः ।
स्वल्पासंबद्धवाक् पाण्डुः कफाद् ध्यानपरोऽलसः ॥ २१ ॥

सर्वात्मा सन्निपातेन रक्तात् स्तब्धाङ्गदृष्टिता ।
पित्तलिङ्गं च मद्येन विकृतेहास्वराङ्गता ॥ २२ ॥
विषे कम्पोऽतिनिद्रा च सर्वेभ्योऽभ्यधिकश्च सः ।
कार्श्यं श्यावारुणाक्षत्वं मूर्च्छाये मारुतात्मके ॥ २३ ॥

पित्तेन तृष्णादाहाढ्यः सस्वेदः पीतलोचनः ।
कफात्स्तिमितगुर्वङ्गः सहृल्लासप्रसेकवान् ॥ २४ ॥
नीलारुणं पीतरक्तं नीलाभं च नभः क्रमात् ।
पश्यन्मूर्च्छायमाप्नोति त्रिभिः सर्वाकृतिः पुनः ॥ २५ ॥

अपस्मार इवापात्य कुर्यान्निश्चेष्टितं च तम् ।
दोषेषु मदमूर्च्छायाः कृतवेगेषु देहिनाम् ॥ २६ ॥
स्वयमेव च शाम्यन्ति सन्यासो नौषधैर्विना ।
प्राणायनाश्रितैर्दोषैर्वाग्भिर्नष्टचेष्टितः ॥ २७ ॥

मृतवत् कफपूर्णास्यः सन्यासान्निपतेन्नरः ।

## मदादित्रयचिकित्सा ।

मदेषु वातपित्तघ्नः प्रायो मूर्च्छासु चेष्यते ॥ २८ ॥
सर्वत्रापि विशेषेण पित्तमेवोपलक्षयेत् ।
शीताः प्रदेहा मणयः सेका व्यजनमारुताः ॥ २९ ॥
सिताद्राक्षेक्षुखर्जूरकाश्मर्यस्वरसं पयः ।
सिद्धं मधुरवर्गेण रसा यूषाः सदाडिमाः ॥ ३० ॥
प्रसक्तवेगेषु हितं मुखनासावरोधनम् ।
पिबेद्वा मानुषीक्षीरं तेन दद्याच्च नावनम् ॥ ३१ ॥
दुरालभां वा रास्नां वा दद्यात्क्षौद्रेण वा जले ।
पिबेन्मरिचकोलास्थिमज्जोशीरा * हिकेसरम ॥ ३२ ॥
धात्रीफलरसे सिद्धं पथ्याक्वाथेन वा घृतम् ।
पञ्चकर्माणि शस्तानि तथा रक्तावसेचनम ॥ ३३ ॥
मृद्वीकादिं मृणालादिं पिबेत् क्वाथं सितायुतम् ।
कल्याणकं महातिक्तं षट्पलं वा घृतं पिबेत ॥ ३४ ॥
पिप्पल्यो वा शिलाह्वं वा रसायनविधानतः ।
त्रिफला वा प्रयोक्तव्या सघृतक्षौद्रशर्कराः ॥ ३५ ॥
त्रयो दोषाः सन्निपत्य प्राणायतनसंश्रयाः ।
सन्यासं मारकं कुर्युस्तं जवाद्विनिवर्तयेत् ॥ ३६ ॥
आशु प्रयोज्यं सन्यासे सुतीक्ष्णं नस्यमञ्जनम् ।
धूमः प्रधमनं तोदः सूचीभिश्च नखान्तरे ॥ ३७ ॥
केशानां लुञ्छनं दाहो दंशो दशनवृश्चिकैः ।

* 'नागपुष्प' इति केरलेषु ॥



कट्वम्लगाळनं वक्त्रे कपिकच्छ्वावघर्षणम् ।
उत्थितो लब्धसंज्ञश्च लशुनस्वरसं पिबेत् ॥ ३८ ॥
लघ्वन्नं कटुतीक्ष्णोष्णमद्यात् स्रोतोविशुद्धये ।
उपाचरेत्तोपकरैः प्रियश्रवणदर्शनैः ॥ ३९ ॥

## अर्शोनिदानम् ।

दोषास्त्वङ्मांसमेदांसि प्रदूष्य विविधाकृतीन् ।
मांसाङ्कुरानपानादौ कुर्वन्त्यर्शांसि तान् जगुः ॥ ४० ॥
सहजन्मौत्तरोत्थानभेदाद्द्वेधा समासतः ।
शुष्कार्द्रभेदतश्चात्र सहजानि त्रिदोषतः ॥ ४१ ॥
षोढान्यानि पृथग्दोषैः संसर्गनिचयास्रतः ।
शुष्काणि वातश्लेष्मभ्यामार्द्राणि त्वस्रपित्ततः ॥ ४२ ॥
गुदे वलित्रययुते यानि चाभ्यन्तरे वलौ ।
स्थितानि च त्रिदोषाणि सहजान्यप्यसाध्यताम् ॥ ४३ ॥
यान्ति मध्यवलीस्थानि कृच्छ्राणि द्वन्द्वजानि च ।
बाह्यायां तु वलौ जातान्येकदोषोल्बणानि च ॥ ४४ ॥
अर्शांसि सुखसाध्यानि नचिरोत्पतितानि च ।
मेढ्रादिष्वपि वक्ष्यन्ते यथास्वं नाभिजानि तु ॥ ४५ ॥
गण्डूपदास्यरूपाणि पिच्छिलानि मृदूनि च ।
व्यानो गृहीत्वा श्लेष्माणं करोत्यर्शस्त्वचो बहिः ॥ ४६ ॥
कीलोपमं स्थिरतरं चर्मकीलं तु तं विदुः ।
तत्र हेतुस्तु कठिनायासनं शीतळाम्बुभिः ॥ ४७ ॥
संस्पर्शोऽतिव्यवायश्च शकृन्मूत्रादिधारणम् ।

ज्वरगुल्मातिसारादि कर्शनं विषमासनम् ॥४८ ॥
एतैरपानः कुपितो मदं गुदवलीषु तु ।
संधत्ते तास्वथ क्लिन्नास्वर्शांसि प्रभवन्ति हि ॥ ४९ ॥
पूर्वरूपं च विष्टम्भो मन्दाग्नित्वं शकृद्ग्रहः ।
भेदोषाकूजनं चान्त्रे मलाल्पत्वातिमूत्रते ॥ ५० ॥
आशङ्का ग्रहणी शोफपाण्डुगुल्मोदरेषु च ।
वातात् गुदाङ्कुरास्तत्र शुष्काः श्यावारुणाः खराः ॥ ५१ ॥
वक्रा मिथो विसदृशास्तीक्ष्णा विस्फुटिताननाः ।
शिरःपार्श्वांसकट्यूरुवङ्क्षणाभ्यधिकव्यथाः ॥ ५२ ॥
पित्तोत्तरा नीलमुखा रक्तपीतासितप्रभाः ।
तन्वस्रस्राविणो विस्राः सोष्माणो मृदवः श्लथाः ॥ ५३ ॥
दाहपाकज्वरस्वेदतृण्मूर्च्छारुचिमोहदाः ।
श्लेष्मोल्बणा महामूला घनमन्दरुजाः सिताः ॥ ५४ ॥
पिच्छिलाः स्तिमिताः श्लक्ष्णाः कण्डूवाढ्याः स्पर्शनप्रियाः ।
वङ्क्षणानाहहृल्लासमेहशीतज्वरप्रदाः ॥ ५५ ॥
संसृष्टलिङ्गाः संसर्गे निचयात्सर्वलक्षणाः ।
रक्तोल्बणाः पित्तसमा दुष्टास्रस्राविणोऽति च ॥ ५६ ॥
रक्तक्षयाद्धीनवर्णबलौजा दुःखितो भवेत् ।

## अर्शश्चिकित्सा ।

---

अर्शांसि शस्त्रक्षाराग्निलेपाभ्यङ्गैरुपाचरेत् ॥ ५७ ॥
दृश्यान्यदृश्यानि पुनः सदान्तःपरिमार्जनैः ।



अथ साधरणे काले नातिदुर्बलमर्शसम् ॥ ५८ ॥
विशुद्धकोष्ठं लघ्वन्नमनुलोमनमाशितम् ।
शुचि कृतस्वस्त्ययनं मुक्तविण्मूत्रमव्यथम् ॥ ७९ ॥
शयने फलके वान्यनरोत्सङ्गेऽप्युपाश्रितम् ।
पूर्वेण कायेनोत्तानं प्रत्यादित्यगुदं समे ॥ ६० ॥
समुन्नतकटीदेशमथ यन्त्रणवाससा ।
सक्थ्नोः शिरोधरायां च परिक्षिप्तमृजुस्थितम् ॥ ६१ ॥
आलम्बितं परिचरैः सर्पिषाभ्यक्तवायवे ।
ततोऽस्मै सर्पिषाभ्यक्तं निदध्यादृजुयन्त्रकम् ॥ ६२ ॥
शनैरनु सुखं पायौ ततो दृष्ट्वा प्रवाहणात् ।
यन्त्रे प्रविष्टं दुर्नाम प्रोटकुण्ठितयानु च ॥ ६३ ॥
शलाकयोत्पीड्य भिषग्यथोक्तविधिना दहेत् ।
क्षारेणैवार्द्रमितरत् क्षारेण ज्वलनेन वा ॥ ६४ ॥
महद्वा बलिनश्छित्वा वीतयन्त्रमथातुरं ।
स्वभ्यक्तपायुजघनमवगाहे निधापयेत् ॥ ६५ ॥
निवातमन्दिरस्थस्य ततोऽस्याचारमादिशेत् ।
एकैकमिति सप्ताहात् सप्ताहात्समुपाचरेत् ॥ ६६ ॥
प्राग्दक्षिणं ततो वाममर्शः पृष्ठाग्रजं ततः ।
वह्वर्शसः सुदग्धस्य स्याद्वायोरनुलोमता ॥ ६७ ॥
रुचिरन्नेऽग्निपटुता स्वास्थ्यं वर्णबलोदयः ।
वस्तिशूले त्वधोनाभेर्लेपयेच्छ्लक्ष्णकल्कितैः ॥ ६८ ॥
वर्षाभूकुष्ठसुरभिमिसिलोहामराह्वयैः ।
शकृन्मूत्रप्रतीघाते परिषेकावगाहयोः ॥ ६९ ॥
वरणालम्बुसैरण्डगोकण्टकपुनर्नवैः ।

सुषवीसुरभीभ्यां च क्वाथमुष्णं प्रयोजयेत् ॥ ७० ॥

सस्नेहमथवा क्षीरं तैलं वा वातनाशनम् ।
अथाप्रयोज्यदाहादेरभ्यज्य गुदकीलकान् ॥ ७१ ॥

बिल्वमूलाग्निकक्षारकुष्ठैः सिद्धेन सेचयेत् ।
तैलेनाहिबिडालोष्ट्रवराहवसयाथवा ॥ ७२ ॥

स्वेदयेदनु पिण्डेन द्रवैर्वा सक्तुभिश्च वा ।
रास्नाया हपुषाया वा पिण्डैर्वा कार्ष्णगन्धिकैः ॥ ७३ ॥

अर्कमूलं शमीपत्रं नृकेशा सर्पकञ्चुकम् ।
मार्जारचर्म सर्पिश्च धूपनं श्रेष्ठमर्शसाम् ॥ ७४ ॥

स्नुक्क्षीरार्कनिशालेपः सुरागोमूत्रकल्कितः ।
कृकवाकुशकृत्कृष्णानिशागुञ्जाफलैस्तथा ॥ ७५ ॥

गोमूत्रपिष्टैर्वा दन्तीचित्रकस्वर्जिकादिभिः ।
तुल्यं बदरचव्ये च हरिद्रा चित्रकं गुळम् ॥ ७६ ॥

पिप्पल्यः कुक्कुटशकृत् घृतं चार्शःप्रलेपनम् ।
शिरीषबीजसंमिश्रां लाङ्गलीं परिलेपयेत् ॥ ७७ ॥

आर्कं पयः सुधाकाण्डं कटुकालाबुपल्लवाः ।
करञ्जं बस्तमूत्रं च लेपनं हितमर्शसाम् ॥ ७८ ॥

धान्याम्लपिष्टैर्जीमूतबीजैस्तज्जालकं मृदु ।
लेपितं च्छायया शुष्कं वर्तिर्गुदजनाशिनी ॥ ७९ ॥

सजालमूलजीमूतलेहे वा क्षारसंयुते ।
गुञ्जासूरणकूश्माण्डबीजैर्वर्तिस्तथागुणा ॥ ८० ॥

उच्छूनकठिनेभ्यश्च जलूकाभिर्हरेदसृक् ।
ससैन्धवं चव्यचित्रकाथं हन्याद्गुदाङ्कुरान् ॥ ८१ ॥



हरीतक्यादिकं क्वाथं पथ्याबिल्वादिकं तथा ।
दुस्पर्शाद्यं च चिरिबिल्वाद्यं पूतिकपूर्वकम् ॥ ८२ ॥

यो जातो गोरसः क्षीराद्वह्निमूलावचूर्णितात् ।
पिबंस्तमेव तेनैव भुञ्जानो गुदजान् जयेत् ॥ ८३ ॥

तक्रेण वा पिबेत् पथ्यावेल्लाग्निकुटजत्वचः ।
कलिङ्गमगधाज्योतिस्सूरणान् वांशवर्धितान् ॥ ८४ ॥

कोष्णाम्बुना वा त्रिपटुव्योषहिङ्ग्वम्लवेतसान् ।
युक्तं बिल्वकपित्थाभ्यां महौषधविळेन वा ॥ ८५ ॥

आरुष्करैर्यवान्या वा प्रदद्यात्तक्रतर्पणम् ।
पिबेदहरहस्तक्रं निरन्नो वा प्रकामतः ॥ ८६ ॥

परमग्निकरं चैतदर्शसामपि नाशनम् ।
त्वचश्चित्रकमूलस्य कल्कं कुम्भे प्रलेपयेत् ॥ ८७ ॥

तक्रं वा दधि वा तत्र जातमर्शोहरं पिबेत् ।
मथितं भाजने क्षुद्रवृन्ताफललेपिते ॥ ८८ ॥

निशां पर्युषितं पेयमिच्छद्भिर्गुदजक्षयम् ।
तक्रारिष्टं पिबेत्तद्वत् पाठातक्रं च शीलयेत् ॥ ८९ ॥

कुटजादिगणं तद्वद्बहुधापि प्रयोजयेत् ।
पथ्याचूर्णं बिळांशाढ्यं नित्यं तक्रेण यः पिबेत् ॥ ९० ॥

भुक्तान्ते तस्य नश्यन्ति गुदजाः सहजा अपि ।
चूर्णं हुतभुगाद्यं च तक्रे वा सूरणादिकम् ॥ ९१ ॥

भार्ङ्गीपाठामृतापञ्चकोलेष्वप्येष संविधिः ।
तक्रं दोषाग्निबलविदर्शोनाशाय शीलयेत् ॥ ९२ ॥

पथ्याशतद्वयं मूत्रद्रोणेनामूत्रसंक्षयात् ।
पक्त्वा खादेत् सहमधू द्वे द्वे हन्ति कफोद्भवान् ॥ ९३ ॥

दुर्नामकुष्ठश्वयथुगुल्ममेहोदरक्रिमीन् ।
ग्रन्थ्यर्बुदापचीस्थौल्यपाण्डुरोगाढ्यमारुतान् ॥ ९४ ॥
करञ्जपल्लवान् खादेद्यावद्वर्चोऽनुलोमनात् ।
लेहं काङ्कायनं वापि जीमूतानां च शीलयेत् ॥ ९५ ॥
पिप्पल्याद्यं घृतं वापि स्नोपाद्यं सर्पिरेव वा ।
पलाशक्षारसर्पिर्वा पञ्चकोलादिकं तथा ॥ ९६ ॥
पिप्पल्यादिप्रतीवापं चित्रककाथसाधितम् ।
घृतमर्शोहरं श्रेष्ठं दीपनं शोधनं परम् ॥ ९७ ॥
ग्रहणीवत् क्रियां कुर्यादर्शसां भिन्नवर्चसाम् ।
अर्शांसि बद्धवर्चांसि तूदावर्तवदाचरेत् ॥ ९८ ॥
अतिप्रवृत्तरक्तानि रक्तपित्तातिसारवत् ।
रक्तार्शांसि द्विधा वायोः श्लेष्मणश्चानुबन्धतः ॥ ९९ ॥
दुष्टास्रलक्षणं तत्र पूर्वोक्तेनैव लक्षयेत् ।
दुष्टेऽस्रे शोधनं कार्यं रक्तस्राव च लङ्घनम् ॥ १०० ॥
पुनः पाकाय दोषाणां हितस्तिक्तोऽग्निदीप्तये ।
यत्तु पित्तोल्बणं रक्तं घर्मकाले प्रवर्तते ॥ १०१ ॥
स्तम्भनीयं तदेकान्ताज्ञचेद्वातकफानुगम् ।
सकफेऽस्रे पिबेत् पाक्यं शुण्ठीकुटजवल्कलम् ॥ १०२ ॥
किराततिक्तकं शुण्ठीधन्वयासं कचन्दनम् ।
दार्वित्वङ्निम्बसेव्यानि पिबेद्वा दाडिमत्वचम् ॥ १०३ ॥
रक्तापामार्गजलक्वाथं रक्तार्शसः पिबेत् ।
चन्दनोशीराद्यं कौटजं फाणितं तथा ॥ १०४ ॥
कुटजादिघृतं पेयं चूर्णो नागरादिको हितः ।
पेयायूषरसाद्येषु पलाण्डुः केवलोऽपि वा ॥ १०५ ॥



जयत्यसृगुल्बणं रक्तं मारुतं च प्रयोजितः ।
रक्तार्शसां प्रशमने क्षीरमाजं च शस्यते ॥ १०६ ॥

## उदावर्तनिदानम् ।

रूक्षैः संग्राहिभिश्चान्नैः स्वे स्थाने कुपितोऽनिलः ।
अधोवहानि स्रोतांसि संरुध्याधः प्रशोषयन् ॥ १०७ ॥
पुरीषं वातविण्मूत्रसङ्गं कुर्वीत दारुणम् ।
तेन तीव्ररुजा कोष्ठपृष्ठहृत्पार्श्वबस्तिगाः ॥ १०८ ॥
पवनस्योर्ध्वगामित्वं ततः छर्द्यरुचिज्वराः ।
बाधिर्यतिमिराद्याश्च जायन्तेऽन्ये च वातजाः ॥ १०९ ॥
दुर्नाम्नामित्युदावर्तः परमोऽयमुपद्रवः ।
वाताभिभूतकोष्ठानां तैर्विनापि स जायते ॥ ११० ॥
तृट्क्लिष्टशूलं क्षामाक्षं विड्वमन्तं परित्यजेत् ।

## उदावर्तचिकित्सा ।

उदावर्तार्तमभ्यज्य तैलैः शीतज्वरापहैः ॥ १११ ॥
सुस्निग्धं स्वेदयेत् पिण्डैर्वर्तिं दद्याद्गुदे ततः ।
भूयोऽनुबन्धे वातघ्नैर्विरेच्यः स्नेहरेचनैः ॥ ११२ ॥
दद्यात् क्वाथं कुलत्थाद्यं श्यामाद्यं त्रिवृदादिकम् ।
निकुम्भाद्यं तथान्यच्च मलवातानुलोमनम् ॥ ११३ ॥

इति हृद्यप्रिये महात्म्यार्शउदावर्तचिकित्सितं नाम
त्रयोविंशोऽध्यायः ।

# चतुर्विंशोऽध्यायः ।

## अतीसारनिदानम् ।

अथात अतीसारनिदानं व्याख्यास्यामः ।

दोषैर्व्यस्तैः समस्तैश्च भयाच्छोकाच्च षड्विधः ।
अतीसारः स सुतरां जायतेऽत्यम्बुपानतः ॥ १ ॥

रूक्षासात्म्यातिमात्राऽन्नैरर्शोभिः स्नेहविभ्रमात् ।
क्रिमिभ्यो वेगरोधाच्च तद्विधैः कुपितोऽनिलः ॥ २ ॥

विस्रंसयत्यधोऽब्धातुं हत्वाऽग्निं द्रावयन् शकृत ।
प्रकल्पतेऽतिसाराय लक्षणं तस्य भाविनः ॥ ३ ॥

तोदो हृद्गुदकोष्ठेषु गात्रसादो मलग्रहः ।
आध्मानमविपाकश्च तत्र वातेन विड्जलम् ॥ ४ ॥

अल्पाल्पं शब्दशूलाढ्यं विबद्धमुपवेश्यते ।
पित्तेन पीतमसितं हारिद्रं पूतिरक्तवत् ॥ ५ ॥

सशूलं पायुसन्तापपाकवच्छ्लेष्मणा घनम् ।
पिच्छिलं तन्तुमच्छ्वेतं स्निग्धमामं कफान्वितम् ॥ ६ ॥

सर्वात्मा सर्वचिह्नः स्यात् वातपित्तात्मकोऽन्ययोः ।
अतीसारः समासेन द्विधा सामो निरामकः ॥ ७ ॥

सासृङ्निरस्रस्तत्रापि चिकित्साथ निरूप्यते ।



## अतीसारचिकित्सा ।

अतीसारो हि भूयिष्ठं भवत्यामाशयाश्रयः ॥ ८ ॥

हत्वाग्निं वातजेऽप्यस्मात् प्रागस्मिँल्लङ्घनं हितम् ।
शूलानाहप्रसेकार्तं वामयेदतिसारिणम् ॥ ९ ॥

दोषाः सन्निचिता ये च विदग्धाहारमूर्च्छिताः ।
अतीसाराय कल्पन्ते तेषूपेक्षैव भेषजम् ॥ १० ॥

भृशोत्क्लेशप्रवृत्तेषु स्वयमेव चलात्मसु ।
प्रयोज्यं न तु संग्राहि पूर्वमामातिसारिणे ॥ ११ ॥

विबद्धमामं कुर्याद्यज्ज्वरप्लीहोदरादिकान् ।
अपि चाध्मानगुरुताशूलस्तैमित्यकारिणि ॥ १२ ॥

प्राणदा प्राणदा दोषे विबद्धेऽसंप्रवर्तिनि ।
पूतीकपिप्पलीशुण्ठीवचाधान्यहरीतकी ॥ १३ ॥

अथवा बिल्वधनिकामुस्तानागरवाळकम् ।
बिळपाठावचापथ्याक्रिमिजिन्नागराणि वा ॥ १४ ॥

शुण्ठीघनवचामाद्रीबिल्ववत्सकहिङ्गु वा ।
वचाप्रतिविषे चापि मुस्तानागरकेऽथवा ॥ १५ ॥

ह्रीबेरनागरे वापि क्वाथयित्वा पिबेज्जलम्
भोज्यानि कल्पयेदस्य ग्राहिदीपनपाचनैः ॥ १६ ॥

विबद्धं दोषबहुलो दीप्ताग्निर्योऽतिसार्यते ।
कृष्णाबिळङ्गत्रिफलाकषायैस्तं विरेचयेत् ॥ १७ ॥

पेयां दद्याद्विरिक्तस्य वातघ्नैर्दीपनैः कृताम् ।
सफेनपिच्छं सरुजं सविबन्धं पुनः पुनः ॥ १८ ॥

अल्पाल्पमनले दीप्ते सूक्ष्मं वस्तूपसेव्यते ।
दधितैलघृतक्षीरैः सशुण्ठीं सगुळां पिबेत् ॥ १९ ॥
पेयां पुनर्गाढवर्चा बहुस्नेहं तथा रसम् ।
खळयूषयवाग्वादौ सानन्तादिं प्रयोजयेत् ॥ २० ॥
लाजैस्तक्रेण पेयां च क्वाथं बिल्वादिकं पिबेत् ।
पथ्यादिकं च शुण्ठ्याद्यं पिप्पल्याद्यं च सामके ॥ २१ ॥
पक्वातिसारे तु पुनः समङ्गादिद्वयं हितम् ।
मुस्ताद्यं वा पिबेत् क्वाथं समङ्गाद्यं जलं तथा ॥ २२ ॥
धन्वयासादिकं क्वाथं कृष्णाद्यं च पिबेत्तथा ।
आजं पयः परं पथ्यं निरामे साम्रकेऽधिकम् ॥ २३ ॥
कल्कस्तिलानां कृष्णानां शर्करापञ्चभागिकः ।
आजेन पयसा पीतः सद्यो रक्तं नियच्छति ॥ २४ ॥
पीत्वा सशर्कराक्षौद्रं चन्दनं तण्डुलाम्बुना ।
दोषाणां पाचनार्थं च वह्निसंदीपनाय च ॥ २५ ॥
संग्रहाय च रक्तस्य परं तिक्तैरुपाचरेत् ।
रक्तं विट्सहितं पूर्वं पश्चाद्वा योऽतिसार्यते ॥ २६ ॥
शतावरीघृतं तस्य लेहार्थमुपकल्पयेत् ।
शर्करार्धांशकं लीढं नवनीतं नवोद्धृतम् ॥ २७ ॥
क्षौद्रपादं जयेच्छीघ्रं तं विकारं हिताशिनः ।
नानावर्णमतीसारं पुटपाकैरुपाचरेत् ॥ २८ ॥
त्वक्पिण्डाद्दीर्घवृन्तस्य श्रीपर्णीपत्रसंवृतात् ।
मृल्लिप्तादग्निना स्विन्नाद्रसं निष्पीडितं हिमम् ॥ २९ ॥
अतीसारे पिबेद्युक्तं मधुना सितयाथवा ।
एवं क्षीरिद्रुमत्वग्भिस्तत्प्ररोहैश्च कल्पयेत् ॥ ३० ॥



तामलक्यब्दशुण्ठीभिः क्वाथः सर्वातिसारजित् ।
सौवर्चलाद्यं पाठाद्यं यवान्याद्यं च चूर्णकम् ॥ ३१ ॥
डाडिमाष्टकमप्येवं दद्यात् पाठादिकं घृतम् ।
गुदस्य पाके दाहे वा सेकालेपा हिता हिमाः ॥ ३२ ॥
पिच्छास्रुतौ गुदभ्रंशे प्रवाहणरुजासु च ।
पिच्छाबस्तिः प्रयोक्तव्यः क्षतक्षीणबलावहः ॥ ३३ ॥
प्रपुण्डरीकासिद्धेन सर्पिषा वानुवासनम् ।
पल्लवान् जर्जरीकृत्य शिंशपाकच्छुदारयोः ॥ ३४ ॥
पचेद्यवांश्च स क्वाथो घृतक्षीरयुतो हितः ।
पिच्छास्रुतौ गुदभ्रंशे प्रवाहणरुजासु च ॥ ३५ ॥
सन्निपातसमुत्पन्नं सम्मिश्रैस्तान् प्रसाधयेत् ।
अर्शोक्तोक्तं वातहरैरेषणाश्वासनैरपि ॥ ३६ ॥
मुस्तादिकाष्टवर्गश्चापराळ्याद्यं (?) च सर्वजित् ।

## ग्रहणीनिदानम् ।

---

अतीसारेषु यो नातियत्नवान् ग्रहणीगदः ॥ ३७ ॥
तस्य स्याद्वह्निविध्वंसकरैरत्यर्थसेवितैः ।
सामं साम्रमजीर्णेऽन्ने जीर्णे पक्वं तु नैव वा ॥ ३८ ॥
अकस्माद्वा मुहुर्बद्धमकस्माच्छिथिलं मुहुः ।
चिरकृद्ग्रहणीदोषः संचयाच्चोपवेश्यते ॥ ३९ ॥
स चतुर्धा पृथग्दोषैः सन्निपाताच्च जायते ।
प्राग्रूपं तस्य सदनं चिरात् पचनमम्लकः ॥ ४० ॥

प्रसेको वक्त्रवैरस्यं तृष्णा कर्णान्त्रकूजनम् ।
कार्श्यं ज्वरः शिरोरुक् च श्वयथुः करपादयोः ॥ ४१ ॥
तत्रानिलात्तालुशोषस्तिमिरं पार्श्ववेदना ।
जीर्णे जीर्यति चाध्मानं भुक्ते स्वास्थ्यं समश्नुते ॥ ४२ ॥
चिराद्दुःखं द्रवं शुष्कं सृजेद्वर्चः पुन पुनः ।
पित्तेन पीतं नीलाभं पूति दाहयुतं द्रवम् ॥ ४३ ॥
कफाद्भिन्नामसश्लेष्मगुरुवर्चःप्रवर्तनम् ।
स्रब्धोदरत्वमरुचिश्छर्दिर्हृल्लासपीनसाः ॥ ४४ ॥
अकृशस्यापि दौर्बल्यं सर्वजे सर्वसंकरः ।

## ग्रहणीचिकित्सा ।

ग्रहणीमाश्रितं दोषमजीर्णवदुपाचरेत् ॥ ४५ ॥
अतीसारोक्तविधिना तस्यामञ्च विपाचयेत् ।
ग्रहण्यां पाचनं पूर्वं मध्ये संग्राहि भेषजम् ॥ ४६ ॥
अन्ते च दीपनं दद्यादतिसारेऽप्ययं विधिः ।
अन्नकाले यवाग्वादि पञ्चकोलादिसाधितम् ॥ ४७ ॥
वितरेत् पटुलघ्वन्नं पुनर्योगांश्च दीपनान् ।
चतुर्विधग्रहण्यां च तक्रं स्यात् परमं हितम् ॥ ४८ ॥
कोलडाडिमवृक्षाम्लचाङ्गेरीणां सुयोजितम् ।
चतुर्णां प्रस्थमम्लानां त्र्यूषणाच्च पलत्रयम् ॥ ४९ ॥
लवणानां च चत्वारि शर्करायाः पलाष्टकम् ।
तच्चूर्णं शाकसूपान्नरागादिष्ववचारयेत् ॥ ५० ॥
कासाजीर्णारुचिश्वासहृत्पाण्ड्वामयशूलनुत् ।



नागरातिविषामुस्तं पाक्यमामहरं पिबेत् ॥ ५१ ॥
उष्णाम्बुना वा तत्कल्कं नागरं वाथवाभयाम् ।
सामे कफानिले कोष्ठरुक्करे कोष्णवारिणा ॥ ५२ ॥
कलिङ्गहिंग्वतिविषावचासौवर्चलाभयाः ।
छर्दी सौवर्चलाजाजीपथ्यातीक्ष्णाः सुखाम्बुना ॥ ५३ ॥
मुस्ताकरञ्जमूलत्वक्छुण्ठीभिः कथितं जलम् ।
पिप्पलीचूर्णसंयुक्तं ग्रहण्यामग्निदीप्तिदम् ॥ ५४ ॥
पाठाद्यं नागराद्यं वा कैडर्याद्याभयादिके ।
पिप्पल्यादिकृतं चूर्णं पट्वादिगुलिकां तथा ॥ ५५ ॥
तालीसपत्रपूर्वं च वटकं शीलयेत् क्रमात् ।
अथैनं परिपक्वामं मारुतग्रहणीगदम् ॥ ५६ ॥
दीपनीयौषधियुतं पाययेदल्पशो घृतम् ।
पञ्चमूलादिना पक्वमुक्तं वाप्यतिसारके ॥ ५७ ॥
पैत्ते चूर्णं पटोलाद्यं भूनिम्बाद्यं च पाययेत् ।
चन्दनाद्यं घृतं दद्यात् कुष्ठोक्तं तिक्तकं तथा ॥ ५८ ॥
ग्रहण्यां श्लेष्मदुष्टायां तीक्ष्णैः प्रच्छर्दने कृते ।
कट्वम्ललवणक्षारैः क्रमादग्निं विवर्धयेत् ॥ ५९ ॥
पञ्चकोलाभयाधान्यपाठागन्धपलाशकैः ।
बीजपूरप्रवालैश्च स्निग्धैः पेयादि कल्पयेत् ॥ ६० ॥
कफे तु मातुलुङ्गाद्यं चूर्णं भूनिम्बपूर्वकम् ।
द्विहरिद्रादिकं क्षारं दद्यात् भुक्तजराभिधम् ॥ ६१ ॥
भल्लातसर्पिर्गुल्मोक्तं यक्ष्मोक्तं षट्पलं घृतम् ।
धान्वन्तरघृतं वापि प्रमेहविहितं पिबेत् ॥ ६२ ॥
निचये पञ्चकर्माणि चिकित्सा च यथोचितम् ।

स्नेहोऽम्ललवणैर्युक्तो बहुवातस्य शस्यते ॥ ६३ ॥
स्नेहमेव परं विद्याद्दुर्बलानलदीपनम् ।
स्नेहासवसुरारिष्टचूर्णकाथहिताशनैः ॥ ६४ ॥
सम्यक् प्रयुक्तैः देहस्य बलमग्निश्च वर्धते ।
नाभोजनेन कायाग्निर्दीप्यते नातिभोजनात् ॥ ६५ ॥
यथा निरिन्धनो वह्निरल्पो वातीन्धनावृतः ।
तस्मान्मात्रां च विसृशेत दद्यादाहारमौषधम् ॥ ६६ ॥
वातव्याध्यश्मरीकुष्ठमेहोदरभगन्दराः ।
अर्शांसि ग्रहणीत्यष्टौ महारोगाः सुदुस्तराः ॥ ६७ ॥

## अत्यग्निनिदानम् ।

---

यदा क्षीणे कफे पित्तं स्वस्थाने पवनानुगम् ।
प्रवृद्धं वर्धयत्यग्निं तदासौ सानिलोऽनलः ॥ ६८ ॥
पक्त्वान्नमाशु धातूंश्च सर्वानोजश्च संक्षिपन् ।
मारकः स्यात् स ना स्वस्थो भुक्ते जीर्णे तु ताम्यति ॥ ६९ ॥
तृड्दाहश्वासमूर्च्छाद्या व्याधयोऽत्यग्निसंभवाः ।
तमत्यग्निं गुरुस्निग्धमन्दसान्द्रहिमस्थिरैः ॥ ७० ॥
अन्नपानैर्नयेच्छान्तिं दीप्तमग्निमिवाम्बुभिः ।
मुहुर्मुहुरजीर्णेऽपि भोज्यान्यस्योपहारयेत् ॥ ७१ ॥
निरिन्धनोऽन्तरं लब्ध्वा यथैनं न विपादयेत् ।
कृसरं पायसं स्निग्धं पैष्टिकं गुळवैकृतम् ॥ ७२ ॥
अश्नीयादौदकानूपपिशितानि भृतानि च ।
लक्ष्मीरसविपक्वान्नं दध्नाद्यान्माहिषेन च ॥ ७३ ॥



अद्याद्भूकन्दमन्यच्च कूश्माण्डं चाग्निनाशनम् ।
पयः सहमधूच्छिष्टं घृतं वा तृषितः पिबेत् ॥ ७४ ॥
गोधूमचूर्णं पयसा बहुसर्पिष्प्लुतं पिबेत् ।
आनूपरसयुक्तान् वा स्नेहांस्तैरविवर्जितान् ॥ ७५ ॥
श्यामात्रिवृद्विपक्वं वा पयो दद्याद्विरेचनम् ।
असकृत्पित्तहरणं पायसप्रतिभोजनम् ॥ ७६ ॥
यत्किञ्चिद्गुरु मेध्यञ्च श्लेष्मकारि च भोजनम् ।
सर्वं तदत्यग्निहितं भुक्त्वा च स्वपनं दिवा ॥ ७७ ॥
आहारमग्निः पचति दोषानाहारवर्जितः ।
धातून क्षीणेषु दोषेषु जीवितं धातुसंक्षये ॥ ७८ ॥

एतत् पक्त्यैव विरुद्धमन्नं
संयोगसंस्कारवशेन चेदम् ।
इत्याद्यविज्ञाय यथेष्टचेष्टा-
श्चरन्ति ये चाग्निबलस्य शक्तितः ॥ ७९ ॥

तस्मादग्निं पालयेत् सर्वयत्नैः
तस्मिन् नष्टे याति ना नाशमेव ।
दोषैर्ग्रस्ते ग्रस्यते रोगसंघैः
मुक्ते तु स्यान्नीरुजो दीर्घजीवी ॥ ८० ॥

इति हृदयप्रिये अतीसारग्रहण्यत्यग्निचिकित्सितं नाम
चतुर्विंशोऽध्यायः ।

# पञ्चविंशोऽध्यायः ।

## मूत्रकृच्छ्रनिदानम् ।

॥ अथातः मूत्रकृच्छ्रनिदानं व्याख्यास्यामः ॥

जायन्ते बस्तिगैर्दोषैर्मूत्राघातास्तु विंशतिः ।
पृथग्दोषैः समस्तैश्च मूत्रकृच्छ्रं चतुर्विधम् ॥ १ ॥
बस्तिवङ्क्षणमेढ्रार्तियुक्तोऽल्पाल्पं मुहुर्मुहुः ।
मूत्रयेद्वातजे कृच्छ्रे पैत्ते पीतं सदाहरुक् ॥ २ ॥
रक्तं वा कफजे बस्तिमेढ्रगौरवशोफवान् ।
सपिच्छं सविबन्धं च सर्वैः सर्वात्मकं मलैः ॥ ३ ॥
यदा वायुर्मुखं बस्तेरावृत्य परिशोषयन् ।
मूत्रं सपित्तं सकफं सशुक्रं वा तदा क्रमात् ॥ ४ ॥
दोषैः शुक्राच्चतुर्धा स्युरश्मर्यो मूत्रमार्गगाः ।
अश्मरीपूर्वरूपं तु बस्त्याध्मानं रुजाभितः ॥ ५ ॥
मूत्रकृच्छ्रतया मार्गनिरोधो नाभिबस्तिरुक् ।
मूत्रं विशीर्णधारं स्यात्तत्रापाये सुखं स्रवेत् ॥ ६ ॥
तत्संक्षोभात् क्षते सास्रमायासाच्चातिरुक् भवेत् ।
तत्र वाताद्भृशार्त्यर्तो बस्तिमेहनमर्दकः ॥ ७ ॥
मुञ्चन् शकृत्सानिलश्च बिन्दुशो मेहति क्वणन् ।

# संस्कृतपुस्तकानि

| | |
|---|---|
| अभिज्ञानशाकुन्तलम् | १—८—० |
| रामवर्मशतकम् | ०—५—० |
| कोकिलसन्देशः (टिप्पणीसहितः) | ०—४—० |
| शुकसन्देशः (टिप्पणीसहितः) | ०—४—० |
| प्रदोषमाहात्म्यम् | ०—४—० |
| गात्रस्तवमञ्जरी | ०—१—६ |
| श्रीमद्भगवद्गीता | ०—३—६ |
| श्रीकृष्णविजयः | ०—१२—० |
| सिद्धान्तमाला | ०—६—० |
| वाक्यतत्त्वम् | ०—६—० |
| विटराजविजयः | ०—६—० |
| पार्वतीविरहः | ०—२—० |
| देवस्तवमालिका | ०—२—० |
| अष्टांगसंग्रहः (इन्दुटीकासहितः, सूत्रशारीरस्थाने) | ५—०—० |
| तस्यैव निदानचिकित्साकल्पस्थानानि | ५—०—० |
| श्रीकृष्णगीतिः | ०—१२—० |
| तर्कसारः | ०—६—० |
| संस्कृतोपक्रमपाठः | ०—१—० |

रघुवंशकाव्यं (आदितः षट्सर्गाः) अरुणगिरिनाथस्य प्रकाशिकया नारायणस्य पदार्थदीपिकया च समेतम् (In press)

Apply to:—

The Manager,
Mangalodayam Co., Ltd.,
TRICHUR.